येषु उपासकेषु ब्रह्मचारिवानप्रस्थेषु जिह्मं कौटिल्यवचनं अनृतम
भाषणं मायाच अन्तरमन्यथा गृहीत्वा बहिरन्यथा प्रकाशनं माया सा च
चकारात् हिंसास्तेयादिकमपि न विद्यत इत्यवगन्तव्यं । तेषां उक्तसाध
पासकानां असौ उत्तरायणगम्यः विरजः शुद्धः वृद्धिक्षयादिदोषरहि
लोकः आदित्यात्मभावलक्षणः प्राप्यत इति शेषः। इतिशब्दः प्रश्नसमाप्त्यर्थ

——:०:——

द्वितीयः प्रश्नः ॥ २ ॥

आधिदैविकस्य प्राणात्मकस्य प्रजापत्तेरुपासनमुक्त्वा तस्यैवाध्यात्मि
वरिष्ठत्वादिगुणकस्य प्राणस्योपासनविधानायाह—

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ ॥ भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥**

अथ कबन्धिकात्यायनप्रश्नानन्तरं ह किल एनं पिप्पलादं भार्गवो भृ
वैदर्भिः विदर्भदेशभवः पप्रच्छ पृष्टवान् । भगवन् हे भगवन् । कत्येव कि
ख्याका एव देवाः देवशब्दवाच्याः प्रजां प्राणिनां शरीररूपां विधारयन्ते वि
कुर्वन्ति । कतरे ज्ञानेन्द्रियकर्मेन्द्रियाणां मध्ये देवा देवराश्योर्वा मध्ये
शरीरं शरीरधारणं वा प्रकाशयन्ते प्रकाशं कुर्वन्ति । कः पुनरेषां वरि
देवानां मध्ये को नाम श्रेष्ठः । इति एवं पप्रच्छेति सम्बन्धः ॥ १ ॥

तस्मै एवं पृष्टवते भार्गवाय सः पिप्पलादः ह किल उवाच उक्त
धारकत्वप्रकाशकत्ववरिष्ठत्वानि प्राणस्यैवेति वक्तुमाख्यायिकामाह—

**तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निराप पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च ॥ ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥**

आकाशः भूताकाशः ह किल वै प्रसिद्धः एषः साक्षिप्रत्यक्षः देवः
न्विजिगीषुः वायुरग्निरापः पृथिवीति भूतचतुष्टयं स्पष्टं वाक् वागिन्द्रियं वा
पाणिपादपायूपस्थानामप्युपलक्षणं । मन इति चतुर्विधान्तःकरणोपलक्षण
चक्षुः श्रोत्रं स्पष्टं । चकारात् । त्वक् घ्राणरसनानां ग्रहणं । ते आकाशादयो
प्रकाश्य अवकाशदानादिरूपं शरीरधारणैकदेशात्मकं स्वस्वकार्यं प्रकाश्य

प्रसिद्धं कृत्वा अभिवदन्ति अवकाशदातृत्वाद्येकैककार्य्यक्षमा अपि सजी-
मवकाशदातृत्वादिसर्वकार्य्यक्षमत्वं स्वस्मिन्नारोप्य परस्परं स्पर्द्धमाना अहं–
तायै सर्वतः कथयन्ति । तदुक्तिमाह वयमिति । वयमिति प्रत्येकं बहुवचन-
गः स्वमहत्त्वसूचनार्थः । वयं एतत् सर्वजनदृष्टिगोचरं बाणं बवयोरैक्यात्
ते कुत्सितं गन्धं वहतीति वाणं । वणति शब्दं करोतीति वाणं । देशाद्दे-
शरं गच्छतीति वा वाणं शरीरं अवष्टभ्य अवष्टंभनं कृत्वा दृढतमं कृत्वा
धारयामः विधारणं कुर्मः गमनादिकार्यक्षमं कुर्म इति यावत् । मयैकेनायं
ध्रियते इत्येकैकस्याभिप्रायः ॥ २ ॥

**तान्वरिष्ठः प्राण उवाच मा मोहमापद्य-**
**थाहमेवैतत्पञ्चधात्मानं प्रविभज्यैत-**
**द्बाणमवष्टभ्य विधारयामीति ॥ ३ ॥**

तान् आकाशादीन् प्रत्येकं शरीरविधारणाभिमानवतः । वरिष्ठः मुख्यः प्राणः
वृत्त्यात्मकः उवाच हस्तसंज्ञया निवारयन्नुक्तवान् । तदुक्तिमाह—मेति ।
निषेधार्थकः मोहं विपरीतज्ञानं मा आपद्यथ मागच्छत । तत्र हेतुमाह—
हमिति । अहमेव मुख्यप्राणात्मा एव । एतत् एतं स्वप्रत्यक्षं । आत्मानं
आत्मकं स्वस्वरूपं पञ्चधा प्राणापानव्यानोदानसमानरूपैः पञ्चप्रकारैः प्रवि-
भज्य प्रकर्षेण भेदवन्तं कृत्वा एतत् बाणं सर्वजनदृष्टिगोचरशरीरं अवष्टभ्य
अवष्टंभनं कृत्वा दृढतमं कृत्वा विधारयामि विविधकार्यक्षमं जीवनवन्तं करोमि
। एवं प्राणेनोक्ते सति ॥ ३ ॥

**तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रमत इव**
**तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिꣳश्च**
**प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते यद्यथा माक्षिका मधु-**
**करराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मि-**
**ꣳश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मन-**
**श्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥**

ते आकाशादयो देवाः परस्परमुखावलोकनहासकरताडनादिनानाचेष्टावन्तः
सन्तः अश्रद्दधानाः प्राणोक्तवाक्ये आस्तिक्यबुद्धिरहिताः बभूवुः स्पष्टं । सः मुख्य-
प्राणः तेषां दर्पमवलोक्य अभिमानात् आत्मनः शरीरधारणक्षमत्वलक्षणादहं-

कारात् उर्ध्वं अष्टोत्तरशतमर्मस्थानानां मध्ये उपरिस्थानं उत्क्रमतइव साक्षादुत्क्रमणे शरीरविनाशं मन्वानः उत्क्रमणमिव कृतवानित्यर्थः ॥ स्वस्थानाच्चलनेनाकाशादिदेवानां व्याकुलत्वं कृतवानिति भावः । तस्मिन् मुख्ये उत्क्रामति ऊर्ध्वं गच्छति सति अथ मुख्यप्राणोत्क्रमणानन्तरं इतरे मुख्यच्छिन्ना आकाशादयः सर्व एव निखिला अपि उत्क्रामन्ते उत्क्रामन्ति पराः सन्तः स्वस्वस्थानेभ्यः प्रचलिता बभूवुः न कोऽप्यात्मानमवष्टब्धवानित्यर्थः तस्मिंश्च मुख्यप्राण एव प्रतिष्ठमाने अवतिष्ठमाने स्वस्थाने स्थिते सति सर्वे उक्ताकाशादयो निखिला अपि प्रातिष्ठंते स्वस्वस्थाने तिष्ठंति तत् तत्र प्राणस्योत्क्रमणे सर्वेषामुत्क्रमणं । प्राणस्य प्रतिष्ठमाने सर्वेषामवस्थानमित्यत्र दृष्टान्तः—यथा यद्वत् मक्षिकाः क्षुद्रा मधुकराः मधुकरराजानं मधुकरेषु श्रेष्ठभूतं उत्क्रामन्तं मध्वऽपूपं परित्यज्योर्ध्वं गच्छन्तं सर्वा एव निखिला अपि मक्षिकाः उत्क्रामन्ते उत्क्रामन्ति तमनुगच्छंतीत्यर्थः । तस्मिंश्च मधुकरराजे प्रतिष्ठमाने मध्वपूपे स्थिते सति सर्वाएव सर्वा मक्षिका अपि प्रातिष्ठन्ते स्थिता भवन्ति एवं उक्तदृष्टांतवत् वाग् वागिन्द्रियं उपलक्षणमेतत् पाणिपादादीनां मनः अन्तःकरणं चक्षुः श्रोत्रं उपलक्षणमेतत् ज्ञानेन्द्रियपंचकमित्यर्थः । चकारादनुक्ताकाशादयो ग्राह्याः । ते उक्ताकाशादयो देवाः शरीरविधारकत्वाभिमानरहिताः प्रीताः प्राणस्य शरीरविधारकत्वं निश्चित्य हर्षमुपागताः प्राणं मुख्यप्राणं स्तुन्वन्ति स्तुतिं कुर्वन्तीत्यर्थः ॥ ४ ॥

तत्स्तुतिमाह—

**एषोऽग्निस्तपत्येष सूर्य्य एष पर्जन्यो**
**मघवानेष वायुरेष पृथिवी रयिर्देवः**
**सदसच्चामृतं च यत् ॥ ५ ॥**

एषः त्वाचप्रत्यक्षो मुख्यप्राणः अग्निः पावकरूपः सन् तपति संतापं करोति । एषः प्राणः सूर्य्यः आदित्यः सन् प्रकाशते इति शेषः । एवमग्रेऽपि तत्तत्क्रियाऽध्याहारेण योजना । एषः प्राणः पर्जन्यः वृष्ट्यभिमानिनी देवता सती वर्षति । किञ्च मघवानिन्द्रः सन्प्रजाः पालयति । जिघांसत्यसुरान् रक्षांसि । एषः प्राणः वायुरावहप्रवहादिभेदरूपः । एषः प्राण :पृथिवी भूमिः । वक्ष्यमाणेष्वपि सर्वेषु एष इति पदमनुवर्त्तनीयं । एषः रयिः चन्द्रः एषः

दीप्तिमान् सदसच्च मूर्त्तामूर्त्तं च एष एव यत् प्रसिद्धम् अमृतं देवानां जीवन-हेतुभूतं पीयूषं तदपि प्राण एव। यद्वा अमृतम् अमरणधर्मकं ब्रह्मापि प्राण एव प्रकारादन्यत्सर्वं वस्तु प्राणात्मकमित्यर्थः ॥ ५ ॥

सर्वात्मकत्वमुक्त्वा सर्वधारकत्वमाह—

**अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ॥**
**ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥**

इव यथा रथनाभौ रथचक्रस्य मध्यप्रदेशे अराः चक्रस्य नाभिनेम्योरन्तराल-वर्त्तिनस्तिर्यक्काष्ठविशेषाः प्रतिष्ठिता इति शेषः। दार्ष्टान्तिकमाह—**प्राण इति।** प्राणे संसारचक्रस्य नाभिभूते मुख्ये प्राणे सर्वं निखिलं अग्निसूर्य्यादिकं प्रतिष्ठितं स्थितं। किञ्च ऋचः पादबद्धा मन्त्राः यजूंषि अविवक्षितछन्दस्का मन्त्राः सामानि गीतिसहिता ऋचः यज्ञः ज्योतिष्टोमादिरूपः क्षत्रं क्षत्रियत्व-जातिः ब्रह्म ब्राह्मणत्वजातिः चकारादुक्तमनुक्तं सर्वं प्राण एवेति पूर्वेणान्वयः ॥ ६ ॥

किञ्च—

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।**
**तुभ्यं प्राणः प्रजास्त्विमा बलिं हरन्ति यः**
**प्राणैः प्रतितिष्ठसि ॥ ७ ॥**

प्रजापतिः विराडात्मापि त्वमेव प्राण एवेति सम्बन्धः। त्वमेव गर्भे पि-तृजठरे रेतोरूपेण मातुर्जठरे पुत्ररूपेण चरसि गच्छसि वर्त्तसे इति यावत्। त्वमेव प्रति प्रातिलोम्येन पिता सन् पुत्ररूपेण जायसे उत्पद्यसे। यद्वा पितु-र्मातुश्च प्रतिरूपः सन्नुत्पद्यसे। प्राणः हे प्राण प्रजास्त्विमाः तुशब्दः एवार्थः। इमाः प्रत्यक्षाः प्रजाः चराचरात्मकाः तुभ्यं त्वदर्थमेव बलिम् उपहारं भोग्यजातं हरन्ति चक्षुरादिद्वारैः प्रापयन्ति। यः प्रसिद्धः त्वं प्राणैः चक्षुरादिभिः सह सर्वशरीरेषु प्रतितिष्ठसि वर्त्तसे। यद्वा प्राणैः प्राणापानादिपंचभिर्वायुभेदैः प्रतितिष्ठसीत्यर्थः ॥ ७ ॥

इदानीमस्यैव मुख्यविभूतीराह—

**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।**
**ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥**

  

देवानाम् इन्द्रादीनां देवानां वन्हितमः अतिशयेन हविषां वाहकः अ त्वमेव भवसि पितॄणां पितृलोकनिवासिनामग्निष्वात्तादीनां प्रथमा पूर्व विनी नान्दीमुखश्राद्धस्य यज्ञादिदेवकर्मापेक्षया पूर्वं कर्त्तव्यत्वात् स्वधा स्व यजमानस्य पितॄन् हवीरूपेण धावति गच्छतीति स्वधा पितृभ्यो दीय नमन्नं तदपि त्वमसि। किञ्च ऋषीणां ऋषगतौ ऋषन्ति गच्छन्ति विषयानि ऋषयः चक्षुरादयः प्राणाः तेषां अथर्वांगिरसां अथर्वयन्ति संघातं पुष न्तीत्यथर्वाणः अंगिनो शरीरस्य रसाः सारभूताः एवं भूतानामिन्द्रिया चरितं चेष्टितं सत्यम् अवितथं देहधारणादिलक्षणमपि त्वमसि त्वं भवसि केचित्तु ऋषीणां गौतमभरद्वाजप्रभृतीनां चरितं चेष्टितं सत्यं धर्मादि त्वमसि । अथर्वांगिरसां अथर्वांगिरसाख्यप्राणसाहचर्य्यादर्थवांगिरस्त्वादि विशेषणमित्याहुः ॥ ८ ॥

किंच—

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ॥**
**त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषां पतिः ॥ ९॥**

इन्द्रः परमेश्वरः त्वमसि त्वं भवसि प्राण हे प्राण तेजसा सर्वसंहा कारिणा वीर्येण रुद्रः संहर्ता असि त्वं भवसि परिरक्षिता थितिका जगतः सर्वतो रक्षिता त्वं प्राण एव अन्तरिक्षे आकाशे चरसि वाय्वादिरूप गच्छसि सूर्य्यः शोभनगतिमान् आदित्यः ज्योतिषां चन्द्रादीनां पति स्वामी त्वं प्राणोऽसि । न केवलं ज्योतिषां पतिः किन्तु प्रजानामानंदकार्य त्वमेवेत्याहुः ॥ ९ ॥

**यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः । आनन्दरूपा-स्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥**

यदा यस्मिन्काले त्वं प्राणः अभिवर्षसि पर्जन्यो भूत्वा जलधारां मुञ्च अथ तदा इमाः प्रत्यक्षाः प्रजाः स्थावरजङ्गमाः प्राणते प्राणन्ति प्राणादिचे कुर्वन्तीत्यर्थः । यद्वा प्राण हे प्राण ते तव इमाः प्रजाः आनन्दरूपाः सु प्राप्ताः तिष्ठन्ति स्थितिं प्राप्नुवन्ति । सुखरूपावस्थाने हेतुमाह कामायेति कामाय यथेष्टम् अन्नं व्रीहियवादिरूपं भाविष्यति स्पष्टं । इति एवमभि प्रायेण ॥ १० ॥

सर्वात्मकत्वेप्यस्य अशुद्धिशून्यत्वमाहुः—

**व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य स-**
**त्पतिः। वयमाद्यस्य दातारः पिता त्वं**
**मातरिश्वनः ॥ ११ ॥**

व्रात्यः उपनयनादिसंस्कारशून्यः त्वं प्रथमजत्वात्संस्कर्तुरभावादसंस्कृतोऽपि त्वं स्वभावत एव शुद्ध इत्यभिप्रायः। प्राण हे प्राण एक ऋषिस्त्वम् आथर्वणानां प्रसिद्ध एकर्षिनामाग्निः सन् विश्वस्य चराचरस्य जगतः अत्ता भोक्ता उपसंहर्ता वा त्वमेवेति सम्बन्धः। सत्पतिः सतां ब्रह्मादीनां पतिः पालयिता संश्चासौ पतिश्चेति वा सत्पतिस्त्वमेवेत्यर्थः। वयम् आकाशादयो देवाः आद्यस्य अदनीयस्य विषयजातस्य दातारः समर्पकाः मातारिश्व हे मातरिश्वन् नकार-लोपश्छान्दसः। नः अस्माकमाकाशादीनां त्वं प्राणः पिता जनकः। यद्वा मातरिश्वनः सर्वजगत्कारणभूतस्य वायोः त्वं पितेत्यर्थः ॥ ११ ॥

एवं स्तुतिं कृत्वा कार्यमाहुः—

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या**
**च चक्षुषि ॥ या च मनसि संतता शिवां**
**तां कुरु मोत्क्रमीः ॥ १२ ॥**

या प्रसिद्धा ते तव तनूः अपानरूपा वाचि वागिंद्रिये प्रतिष्ठिता वक्तृत्वेन वदन-चेष्टां कुर्वती या प्रसिद्धा व्यानरूपा श्रोत्रे श्रोत्रेंद्रिये प्रतिष्ठिता। या च प्र-सिद्धा प्राणरूपा चक्षुषि चक्षुरिंद्रिये प्रतिष्ठिता इति सर्वत्र सम्बन्धः। या च प्रसिद्धा समानरूपा ते तनूः मनसि संकल्पादिव्यापारेण सन्तता सम्यक्प्राणा-दिरूपेण विस्तृता। स प्राणस्तच्चक्षुः स व्यानस्तच्छ्रोत्रं सोऽपानः सा वाक् समानस्तन्मन इति श्रुतेः। तां तनूं शिवां शान्तां कुरु त्वंच मोत्क्रमीः उत्क्रमणं माकार्षीरित्यर्थः ॥ १२ ॥

न वयं पूर्ववत्स्ववन्त्रबुद्धय इत्याहुः—

**प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितं। मातेव**
**पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि नः ॥ १३ ॥**

**इति द्वितीयः प्रश्नः ॥ २ ॥**

प्राणस्य तव इदं नानाप्रत्ययगोचरमस्मदादिकं सर्वं जगत् वशे वर्त्तते इति शेषः। सर्वशब्दार्थमाह—त्रिदिव इति। यत्प्रसिद्धं स्वर्गे त्रिदिवोपलक्षितात्रिलोक्यां प्रतिष्ठितम् अवस्थितं तत्सर्वं प्राणस्य वशे सम्बन्धः। हे प्राण त्वमस्मान् मातेव जननीवत् पुत्रान् रक्षस्व सर्वात्मना पाहि। नः अस्मभ्यं श्रीः श्रियः नानाविधा लक्ष्मीः प्रज्ञां लोकवेदविषयिणीं बुद्धिं विधेहि प्रयच्छ। चकारावनुक्तसमुच्चयार्थौ। अन्यदप्यस्माकं हितं प्रयच्छ। इति एवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्रजापतिरत्तेत्यवधृतमित्यर्थः॥ १३॥

इति द्वितीयः प्रश्नः॥ २॥

## अथ तृतीयः प्रश्नः।

एवं प्रजापतेरत्तुः सर्वात्मकत्वेन श्रेष्ठत्वेनावधारितस्य प्राणस्योपासनां विधातुं तदीयोत्पत्तिस्थित्यादिनिर्णयाय तृतीयप्रश्नमारभते—

**अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ भगवन्कुत एष प्राणो जायते। कथमायात्यस्मिञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति॥ १॥**

अथ भार्गववैदर्भिप्रश्नानन्तरं ह प्रसिद्धम् एनं पिप्पलादं कौसल्यश्चाश्वलायनः पप्रच्छ पृष्टवान् भगवन् हे भगवन् कुतः कस्मादुपादाननिमित्तात्कारणात् एषः उक्तलक्षणः प्राणः पञ्चवृत्त्यात्मकः जायते उत्पद्यते। १। कथं केन प्रकारेणास्मिन्प्रत्यक्षसिद्धे शरीरे स्थूलदेहे आयाति आगच्छति, केन निमित्तेन शरीरं गृह्णातीति प्रष्टुरभिप्रायः। २। वा प्रश्नान्तरे आत्मानं स्वं प्रविभज्य प्रकर्षेण विभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति स्थितो भवति। ३। केनोत्क्रमते केन वृत्तिविशेषेण केन द्वारेण वा केन निमित्तेन उत्क्रमते उत्क्रामति स्थूलशरीराद्बहिर्गच्छति। ४। कथं केन प्रकारेण बाह्यम् अधिभूतम् अधिदैवं च अभिधत्ते धारयति तत्तद्रूपेणावतिष्ठते इति यावत्। ५। कथं केन प्रकारेण अध्यात्मं आत्मा सन्निकृत्य वर्तमानं देहेन्द्रियादिकं धत्ते इत्यनुषङ्गः। ६। इति एवं पृष्टे सति॥ १॥

**तस्मै सहोवाचातिप्रश्नान् पृच्छसि**
**ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥**

सः पिप्पलादाचार्यः ह किल तस्मै कौसल्याय उवाच उक्तवान् । अतिप्रश्नान् सूक्ष्मार्थप्रश्नविषयान्प्रष्टव्यार्थान् पृच्छसि सूक्ष्मार्थविषयकप्रश्नं करोषि अतो ब्रह्मिष्ठोऽसीत्यतिशयेन वेदार्थवेत्ता असि भवसि । यद्वा ब्रह्मविदसीति उत्साहार्थं तं स्तौतीति भावः । इति एवं यस्मात् तस्मात् ब्रह्मिष्ठत्वात् ते तुभ्यमधिकारिणे आश्वलायनाय अहं पिप्पलादनामा ब्रवीमि कथयामि त्वं शृणु ॥ २ ॥

प्रथमप्रश्नोत्तरमाह—

**आत्मन एष प्राणो जायते ॥ यथैषा पुरुषे छायै-**
**तस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥**

आत्मनः परस्मादक्षरात्पुरुषात् एषः प्रकृतः प्राणः पञ्चवृत्त्यात्मकः जायते उत्पद्यते । आत्मनो जायमानः प्राणः न वास्तव इत्यत्र दृष्टान्तमाह—**यथेति**। यथा लोके एषा सर्वजनप्रत्यक्षा छाया देहाज्जाता छाया प्रतिबिंबादिरूपा पुरुषे करचरणादिमति देहे निमित्ते सति जायते । तद्वद् एतस्मिन्प्राणकारणभूते ब्रह्मणि एतत् प्राणाख्यं तत्त्वमनृतरूपम् आततं समर्पितं न तु वास्तवमित्यर्थः एतेन प्रतिबिंबस्य बिंबात् पृथक्सत्ताशून्यत्वेन बिंबमात्राश्रितवत् प्राणस्याप्यात्ममात्राश्रितत्वमिति सूचितं । कथमायात्यस्मिञ्छरीरे इति द्वितीयप्रश्नोत्तरमाह—**मन इति** । मनोकृतेन मनसः संकल्पादिनिष्पन्नकर्मनिमित्तेन । मनोकृतेनेत्यत्र अधिकरणं छान्दसम् । आयाति आगच्छति । अस्मिञ्छरीरे स्थूलदेहे इत्यर्थः ॥३॥

आत्मानं वा प्रविभज्य कथं प्रातिष्ठते इति तृतीयप्रश्नोत्तरं सदृष्टान्तमाह—

**यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रामा-**
**नेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः । इतरा-**
**न्प्राणान्पृथक्पृथगेव संनिधत्ते ॥ ४ ॥**

यथा येन प्रकारेण सम्राडेव सार्वभौमो राजेव अधिकृतान् स्वस्वाधिकारे स्थितान् मन्त्रिप्रभृतीन् विनियुंक्ते विनियोगं प्रेरणं कुरुते । विनियोगप्रकारमाह—**एतानिति** । एतान् ग्रामान्कुरुदेशगतान् त्वं अधितिष्ठस्व अधिष्ठानं कुरु एतान् ग्रामान् पंचालदेशप्राप्तान् त्वं अधितिष्ठस्व इति एवं विनियुंक्ते । एव-

मेव उक्तदृष्टान्तवदेव एषः प्राणः मुख्यः प्राणः इतरान्स्वव्यतिरिक्तान् चक्षुरादीन् आत्मभेदाँश्च पृथक् पृथगेव भिन्नभिन्नस्थानविशेषेष्वेव संस्थापयतीत्यर्थः ॥ ४ ॥

अत्र नेत्रादीनां स्वस्वगोलकस्थानानां स्वस्वस्थाने संस्थापनं स्पष्टं मुख्यप्राणवृत्तिभेदानां स्वस्वस्थाने संस्थापनं श्रुतिराह—

**पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां स्वयं प्रातिष्ठते मध्ये तु समानः ॥ एष ह्येतद्धुतं समुन्नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥**

पायुश्चोपस्थश्च पायूपस्थं तस्मिन् पायूपस्थे अपानं अपानसंज्ञकं मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठतीति शेषः । तथा चक्षुःश्रोत्रे चक्षुश्च चक्षुःश्रोत्रं तस्मिन् चक्षुःश्रोत्रे प्राणः मुख्यप्राणः स्वयं वृत्तिं विन येन रूपेण मुखनासिकाभ्यां मुखं च नासिका च मुखनासिके ताभ्यां सिकाभ्यां च निर्गच्छन्स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति । मध्ये रमध्यदेशे नाभिरूप एव समानः अशितं पीतं च समं नयतीति समा तिष्ठतीत्यनुषङ्गः । समानशब्दस्यार्थमाह—**एष हीति** । हि यस्मात् एषः समानः एतत् प्रत्यक्षसिद्धमोदनादिरूपमन्नम् अदनीयं हुतं जठराग्नि समं यावता नीयमानेन तत्तत्स्थानेंद्रियादीनां बाधा न भवति तावत् तत्त यादौ नयति प्रापयति । तस्मात् समानेन नीतान्नात् एताः वक्ष्यमा सप्त द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके मुखं चेति सप्तसंख्याकाः रस्थाः अर्चिषः अर्चिः अग्नेर्ज्वाला तद्वत् शब्दादिविषयप्रकाशकत्वा नोक्ताः शब्दादिबुद्धयः भवन्ति जायन्त इत्यर्थः ॥ ५ ॥

व्याननाडीस्थानं वक्तुं नाडीनामुत्पत्तिस्थानं हृदयमाह—

**हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्र शाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥**

हि यस्मात् एषः साक्षिप्रत्यक्षः आत्मा लिङ्गात्मा प्राणः हृदि मांसपिंडे वर्त्तते तस्मादत्र अस्मिन् हृदये एतत् शरीरविधारकत्वेन नाडीनां प्रधानभूतनाडीनां एकशतमेकाधिकं शतं १०१ भवतीति

एकोत्तरशतसंख्याकानां प्रधानभूतानां नाडीनां मध्ये एकैकस्यां एकस्या या नाड्याः शतंशतं शतशतसंख्याकाः शाखानाड्यः सन्ति । तथा च तरशतं शतेन गुणितं १०१×१०० जाताः शाखानाड्यः शतोत्तरदश १०१०० । शाखानाडीनामपि प्रत्येकं भेदमाह—**द्वासप्ततिरिति** । स्या इत्यस्य देहलीदीपन्यायेनोत्तरत्रापि संबंधः कर्तव्यः । तासामित्य-वृत्तिश्च कार्या । तथा च तासां शतोत्तरदशसहस्रनाडीनां मध्ये एकैकस्याः ताः द्वासप्ततिर्द्वीसप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति शाखाभ्यो निर्गताः : प्रतिशाखानाड्यः तासां सहस्राणीति विग्रहः । तथाच १०१०० त्तरदशसहस्रं द्वासप्ततिसहस्रेण ७२००० गुणितं जाताः प्रतिशाखाना- द्वासप्ततिकोटयो द्वासप्ततिलक्षाणि च ७२७२००००० । एवं प्रधानभूत- १०१ शाखानाडी १०१०० प्रतिशाखानाडीनां संमेलने कृते जाता ७२००००० नाड्यो द्वासप्ततिकोटयो द्वासप्ततिलक्षाणि दशसहस्रं च यमेका च ७२७२१०२०१ भवन्तीति द्रष्टव्यं । केचित्तु एका सुषु-म्ना मूलभूता नाडी हृदयान्निर्गता तस्याः स्कन्धभूता नाड्यो दश सन्ति प्रत्येकं नवनव शाखानाड्यः सन्ति । तथाच दश स्कंधनाड्यः शाखानाडी-नवतिभिः सहिताः शतसंख्याः सन्ति । तासां शतनाडीनामपि प्रत्येकं शतं शाखानाड्यः सन्ति । तथा चैका मुख्या १ स्कन्धशाखाभूताः ख्याकाः १०० तासां शाखाभूता दशसहस्रसंख्याकाः १०००० पि दशसहस्रसंख्याकानां नाडीनां प्रत्येकं द्वासप्ततिसहस्रसंख्या नाड्यः स्युः च दशसहस्रसंख्यायाः द्वासप्ततिसहस्रसंख्यया गुणने द्वासप्ततिकोटयः ०००००० भवन्ति । एवं च तासां संमेलने कृते जाता ७२००१०१०१ द्वासप्ततिकोटयो दशसहस्राणि शतमेकाचेत्याहुः । नाडीरुक्त्वा व्यानस्य तत्स्थानमाह—**आस्विति** । आसु उक्तसंख्यासु सूक्ष्मासु षु व्यानः वीर्य्यवत्कर्महेतुः प्राणवृत्तिविशेषः रचति गच्छतीत्यर्थः । एवं द्वारा सर्वशरीरव्याप्यपि व्यानो वायुः विशेषतः संधिस्कन्धमर्मदेशेषु इति भावः ॥ ६ ॥

इदानीमुदानस्य स्थानं वदन् केनोत्क्रमते इति चतुर्थप्रश्नोत्तरमाह—

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥**

सर्वनाडीषु व्यानसंचारेणैव हेतुना एकया ऊर्ध्वगामिन्या सुषुम्ण ऊर्ध्वं ऊर्ध्वचारी उदानः ऊर्ध्वचारित्वादेवोदानसंज्ञकः प्राणवृत्तिविशेष पुण्येन शास्त्रविहितेन कर्मणा पुण्यं पुण्यकर्मफलरूपं लोकं स्वर्गादिमो नयति प्रापयति । पापेन शास्त्रनिषिद्धेन कर्मणा पापं पापकर्मफलभूतं तिर्यग्योन्यादिलक्षणं नयतीत्यनुषङ्गः । उभाभ्यामेव पुण्यपापाभ्यां सम भ्यामेव मनुष्यलोकं सुखदुःखायतनं मानवं देहं नयतीत्यनुषङ्गः ॥ ७ ॥

इदानीं कथं बाह्यमभिधत्ते कथमध्यात्ममित्यनयोः प्रश्नयोरुत्तरं का द्वयेनाह—

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः ॥ पृथिव्यां या देवता सैषा पुरुष-स्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥**

आदित्यः मण्डलाभिमानी पुरुषः ह वै प्रसिद्धः बाह्यः अध्यात्मा प्राणः मुख्यप्राणः उदयति उदयं गच्छति हि यस्मात् एकः बाह्यः प्राण अध्यात्मकं चाक्षुषं चक्षुषि भवं प्राणवृत्तिरूपं अनुगृह्णानः प्रकाशेनानुग्रहं उदयतीत्यन्वयः । पृथिव्यां भुवि या प्रसिद्धा देवता अधिष्ठात्रीरूपा सा देवता एषा पुरुषेण प्रत्यक्षेवानुभूयमाना पुरुषस्य शिरःपाण्यादिमतः दे पानं अध्यात्मकमपानसंज्ञकं अवष्टभ्य आकृष्य अधएवापकर्षणेनानुग्रहं कु वर्तत इति शेषः । अन्यथा शरीरस्य गुरुत्वात्पतनं स्यादिति भावः । आदित्यपृथिव्योर्मध्ये यत् यः प्रसिद्धः आकाशः अवकाशदाता सः आ समानः समानसंज्ञकं वृत्तिभेदमनुगृह्णानो वर्त्तते इत्यर्थः । अनुग्राह्यानुग्राह रभेदोपचारात्स समान इत्युक्तम् । वायुः बाह्यः पवनः व्यानः व्यानवृत्ति मनुगृह्णानो वर्तत इत्यर्थः ॥ ८ ॥

**तेजो ह वै उदानस्तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥ ९ ॥**

तेजः दाहप्रकाशकरं सामान्यं तेजः ह वै प्रसिद्धः उदानः उदानाख्यवृत्तिभेदानुग्राहकः । एवमादित्यादिना रूपेण मुख्यप्राणस्य प्राणापानसमानोदानव्यानानुग्राहकत्वोक्त्या अध्यात्मं प्राणादिवृत्त्यनुग्राहकत्त्वमुक्तम् । आदित्याभ्याकाशसामान्यवायुस्तेजोरूपी सन् बाह्यमधिदैवमादित्यादिकं धारयतीत्युक्तं तद्रूपेणावस्थानमेव तद्धारणं प्राणापानाद्यनुग्रहेण चक्षुराद्यनुग्रहोक्तेःतद्वारा तद्ग्राह्याधिभूतविधारकत्वमुक्तं "स प्राणस्तच्चक्षुः सोऽपानः सा वाक् स व्यानस्तच्छ्रोत्रं स समानस्तन्मनः स उदानः स वायुः" इतिश्रुत्यन्तरे चक्षुरादीनां प्राणाद्यात्मत्वोक्तेश्चक्षुराद्यनुग्राहकत्वोक्त्या चक्षुरादिरूपाध्यात्मविधारकत्वं चोक्तमिति कथं बाह्यमभिधत्ते कथमध्यात्ममित्यस्योत्तरमुक्तमिति द्रष्टव्यमिति भावः । तेजस उदानवाय्वनुग्राहकत्वं व्यतिरेकप्रदर्शनेनाह—**तस्मादिति** । यस्मात्तेजस उदानवाय्वनुग्राहकत्वं तस्मादुपशांततेजाः उपशान्तम् उच्छिन्नं तेजः शरीरगतं यस्य सः पुरुषः पुनर्भवं तच्छरीरं त्यक्त्वा पुनः शरीरान्तरं प्रतिपद्यत इति शेषः । शरीरान्तरप्राप्तिकालं सप्रकारमाह—**इन्द्रियैरिति** । इन्द्रियैः वागादिकरणैः मनसि अन्तःकरणे सम्पद्यमानैः प्रविशद्भिरिन्द्रियैः सह शरीरान्तरं प्रतिपद्यत इति पूर्वेणान्वयः । यदेंद्रियाणि मनसि सम्पद्यन्ते तदा मुमूर्षुर्विद्यादित्याभिप्रायः ॥ ९ ॥

उक्तशरीरान्तरप्राप्तिमेवोत्क्रांतिक्रमप्रदर्शनेन स्पष्टीकर्तुमाह—

**यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः ॥**
**सहात्मना यथासंकल्पितं लोकं नयति ॥ १० ॥**

याच्चित्तः यदेव देवतिर्यगादिशरीरं तदेव सम्यागिति चित्तं यस्य स यच्चित्त इत्यर्थः । तेन देवतिर्यगादिसंकल्पविशिष्टेन मनसा सेंद्रियेण सह एषः अन्तःकरणाभिमानी जीवः प्राणं मुख्यप्राणं आयाति आगच्छति मरणकाले क्षीणेंद्रियवृत्तिः सन् मुख्यप्राणवृत्त्यैवावतिष्ठत इत्यर्थः । प्राणः पूर्वोक्तः तेजसा तेजोरूपोदानेन युक्तः संबद्धः सहात्मना भोक्तृसहितः यथासङ्कल्पितं कर्मज्ञानादिसाधनानुष्ठानकाले यथाऽभिप्रेतं लोकं कर्मविपाकफलभूतं भावि शरीरं नयति भोक्तारं प्रापयतीत्यर्थः ॥ १० ॥

एवं प्राणस्वरूपमभिधाय तदुपासनं विधत्ते—

**य एवं विद्वान्प्राणं वेद ॥ न हास्य प्रजा हीयंतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥**

यः कश्चिद् विद्वान्पुरुषः एवं यथोक्तोत्पत्त्यादिभिर्विशेषणैर्विशिष्टम् प्राणो जायते मनःकृताभ्यां धर्माधर्माभ्यां शरीरं गृह्णाति आत्म पंचधा प्रविभज्य पायूपस्थयोरपानं स्वस्वरूपं प्राणं चक्षुः श्रोत्रयोः समानं नाडीसमूहे व्यानम् उदानं च सुषुम्नायां सम्राडिव स्थाप उदानेनोत्क्रामति बाह्यैः प्राणापानसमानव्यानोदानानुग्राहकैरादित्यपृ काशवायुतेजोरूपैरधिदैवमादित्यादिकम् आदित्यादिकृतानुग्रहैरध्यात्मं वाक्श्रोत्रमनःत्वक् चक्षुरादिभिर्ग्राह्यमधिभूतं च धारयति । सैवोदा भोक्ता च युक्तो भोक्तारं लोकान्तरं नयति स एव च वरिष्ठः प्रजापति चेत्येवं प्रकारेण प्राणं पंचवृत्तिरूपं वेद जानाति । ह निश्चितम् अस्य पासकविदुषः प्रजाः पुत्रपौत्रादिलक्षणाः न हीयन्ते न छिद्यन्ते न वि न्तीति यावत् । प्रजा इति प्रथमाबहुवचनान्त पाठस्थाने प्रथमैकव पाठपक्षे न हीयन्ते इत्यस्य स्थाने न हीयते इति पाठपक्षे प्रजा इ पुत्रपौत्रादिलक्षणसंततिरित्यर्थः । न हीयते इत्यस्य च न नश्यती सकामिन ऐहिकंफलमुक्त्वा निष्कामस्यामुष्मिकफलमाह—**अमृतो** **तीति** । पूर्वोक्तविदुषः शरीरे पतिते सति अमृतो भवति । नात्र मुख्यम किन्तु . प्राणसायुज्यलक्षणममृतममरणधर्मत्वं प्राप्नोति । तत् तत्रामृतो त्यस्मिन्नर्थे एषः वक्ष्यमाणः संक्षेपाभिधायक एव श्लोकः मन्त्रो भव ह्येषः ॥ ११ ॥

मन्त्रमेवाह—

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ॥**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते**
**विज्ञायामृतमश्नुत इति ॥ १२ ॥**

**इति तृतीयः प्रश्नः ॥ ३ ॥**

उत्पत्तिं मुख्यप्राणस्य परमात्मनः जनिम् । अत्र सर्वेषां द्वितीया विज्ञायेत्यनेन सम्बन्धो ज्ञेयः । आयतिं मनःकृताभ्यां धर्माधर्माभ्यां

प्राणस्यायातिमागमनं । ह्रस्वत्वं छान्दसं । स्थानं पायूपस्थादिस्थानेषु स्थितिं । विभुत्वं सूर्य्यपृथिव्याकाशवाय्वग्निभिर्व्याप्तत्वं । सम्राडिव स्वाम्यमिति वा । चकारादुदानेनोत्क्रमणं च गृह्यते । एवकारो भिन्नस्थानकः पञ्चधैवेति । पंचधा इत्यनेन सम्बध्यते । तथा च सूर्य्यादिप्राणादिभेदैः पञ्चप्रकारमेव अध्यात्मं चैव अत्राप्येवकारो भिन्नस्थानकः प्राणस्येत्यनेन सम्बध्यते । तथाच मुख्यप्राणस्यैव यद्यपि सूर्य्यादयश्चक्षुरादयश्च मुख्येन प्राणेन भेदरहिताः तथापि मुख्यप्राणस्यैवैतद्विभूतिजातं न त्वन्यस्य सूर्य्यादेः विज्ञाय विशेषेणोक्तेन प्रकारेणं ज्ञात्वा अमृतं हिरण्यगर्भेण सायुज्यं चित्तशुद्ध्यादिना ज्ञानप्राप्तिद्वारा मोक्षमिति वा अश्नुते प्राप्नोति स्वप्रकाशेनानन्दात्मरूपेण भवतीत्यभिप्रायः । पदाभ्यासः प्राणविद्यासमाप्त्यर्थः ॥ १२ ॥

इति तृतीयः प्रश्नः ॥ ३ ॥

अथ चतुर्थः प्रश्नः ।

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ ॥भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥**

प्राणस्योत्पत्यादिमत्त्वेन।नात्मत्वे निर्धारिते तद्व्यतिरिक्तात्मस्वरूपनिर्धारणार्थमुत्तरो ग्रन्थ आरभ्यते–**अथेति** । अथ कौशल्याश्वलायनप्रश्नानंतरं । ह प्रसिद्धमेनं पिप्पलादं सौर्यायणी सूर्य्यस्यापत्यं सौर्यायणिः ईकारस्तु छांदसः गार्ग्यः गर्गगोत्रोत्पन्नः पप्रच्छ । स्पष्टं । भगवन् हे पूजावन् एतस्मिन् सर्वजनप्रत्यक्षे पुरुषे शिरःपाण्यादिमति देहे कानि करणानि स्वपन्ति स्वापं कुर्वन्ति स्वव्यापारादुपरमन्त इत्यर्थः ॥ १ ॥ कानि करणानि अस्मिन् शरीरे जाग्रति जागरणावस्थां देहरक्षार्थं स्वव्यापारं कुर्वन्ति ॥ २ ॥ कतरः कार्य्यकरणलक्षणयोर्मध्ये कः एषः अहं पश्यामीत्यहंप्रत्ययेन प्रत्यक्षः देवः द्योतनात्मकः स्वप्नान् जाग्रद्दर्शनवासनाजन्यान् जाग्रद्वदन्तः शरीरे गजरथादिपदार्थान् पश्यति अवलोकयति ॥ ३ ॥ उपरते च जाग्रत्स्वप्नव्यापारे कस्य करणाद्यन्यतमस्य तद्व्यतिरिक्तस्य वा एतत् सौषुप्तं

सुखं विक्षेपाभावमात्रेणानुकूलप्रत्ययवेदनीयं स्वप्रकाशमानसुखं कस्य वीति यावत् ॥ ४ ॥ कस्मिन्नेकास्मिन्नाधारभूते नु वितर्के सर्वाधारस्यापि णस्य जायमानत्वात् सर्वे प्राणकरणादिनिखिलाः संप्रतिष्ठिताः सम्यगेक मधुनि रसवत्स्थिताः भवन्ति ॥ ५॥ इति एवं प्रकारेण पञ्च प्रश्नान् पूर्वेणान्वयः ॥ १ ॥

उक्तप्रश्नानामुत्तरं पिप्पलादः क्रमेणाह—

**तस्मै स होवाच ॥ यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति ॥ ताः पुनःपुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति ॥ तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥**

तस्मै गार्ग्याय सः पिप्पलादः ह किल उवाच उक्तवान् । किमुक्तवानित्य क्षायां मनःप्राणव्यतिरिक्तानि सर्वकरणानि स्वपन्तीति वक्तुं तावद्दृष्टान्त **यथेति** । गार्ग्य यथा येन प्रकारेण अर्कस्य सूर्य्यस्यास्तंगच्छतः कालेऽदर्शनं व्रजतः मरीचयः किरणाः सर्वाः निखिलाः एतस्मिन् सर्व त्यक्षे तेजोमण्डले तेजोराशिरूपे एकीभवन्ति विवेकानर्हत्वं तेजोमण्डले ए रूपतां गच्छन्ति पुनः भूयः सूर्य्यमण्डले एकतां गताः ताः मरीचयः पुनः द्वितीयदिवसे उदयतः उदयं गच्छतः सूर्य्यस्य प्रचरन्ति सर्वासु दिक्षु संचार न्ति । एवं दृष्टांतमुक्त्वा दार्ष्टांतिकमाह—**एवमिति** । एवं सूर्य्यमरीचिव प्रसिद्धं वै स्मर्यमाणं तत् वागादिकं मरीचिस्थानीयं सर्वं निखिलं परे वागादिवृत्त्युत्पत्तिनिरोधनिमित्ते द्योतनवति देवे सर्वव्यवहारकारणे मनसि करणेऽर्कस्थानीये एकीभवति स्वप्नकाले निर्विशेषतां गच्छति । तेन वा मनस्येकीभवनेन तर्हि तस्मिन्स्वापकाले एषः लोकप्रत्यक्षः पुरुषः देव लक्षणः न शृणोति शब्दश्रवणं न करोति । न पश्यति नावलोकय न जिघ्रति सुरभ्यसुरभिलक्षणं गन्धं न गृह्णाति । न रसयते मधुर

र्शं न गृह्णाति । न स्पृशते शीतोष्णादिस्पर्शं न जानाति । नाभिवदते अभिवदनं संभाषणं न करोति । नादत्ते किमपि वस्तुग्रहणं न करोति । नानंदते उपस्थेंद्रियकर्मभूतमानन्दं न गृह्णाति । उपस्थेंद्रियेण सुखं नानुभवतीति भावत् । न विसृजते पायुना मलत्यागं न करोति । नेयायते गत्यर्थस्येणो यङंस्यैतद्रूपं छान्दसं न गच्छतीत्यर्थः । स्वपिति शयनं करोति इति एवं आचक्षते कथयन्ति विद्वांस इति शेषः । कानि स्वपंतीत्यस्य प्रश्नस्य श्रोत्रादिज्ञानेंद्रियाणि । वागादिकर्मेन्द्रियाणि च स्वपन्तीत्यस्योत्तरं दत्तम् ॥ २ ॥

इदानीं कान्यस्मिन् जाग्रतीत्यस्य प्रश्नस्योत्तरमाह—

**प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥**

एतस्मिन् सर्वजनप्रत्यक्षे पुरे नवद्वारे देहे प्राणाग्नय एव प्राणापानव्यानोदानसमानाख्याः पञ्चप्राणभेदा अग्नय इवाग्नयो जाग्रति जागरणं कुर्वंति । प्रसंगेन उपासनार्थं प्राणानामग्नित्वमुपपादयति—**गार्हपत्य इति** । गार्हपत्यः गार्हपत्यसंज्ञकोऽग्निहोत्रिभिर्निरन्तरं रक्षणीयोऽग्निः ह वै प्रसिद्धः एषः मलमूत्रापनयनकार्यगम्यः अपानः अपानाख्यः प्राणवृत्तिविशेषोऽस्तीति शेषः । व्यानः व्यानाख्यः प्राणभेदः अन्वाहार्यपचनः अन्वाहार्यओदनविशेषः पच्यतेऽस्मिन्नित्यन्वाहार्यपचनो दक्षिणाग्निस्तद्रूपो व्यान इत्यर्थः । यथा दक्षिणाग्निर्दक्षिणकुण्डे स्थित तथा व्यानोऽपि हृदयस्थ पंचच्छिद्राणां मध्ये दक्षिणाच्छिद्रे स्थितः । दक्षिणदिक्स्थितत्वसाम्याद्व्यानोऽन्वाहार्यपचनइति भावः । इदानीमपानस्य गार्हपत्यत्वे उक्ते प्राणस्य चाहवनीयत्वे वक्ष्यमाणे साधारणं हेतुमाह—**यदिति** । यत् यस्मात् गार्हपत्यात् अग्निहोत्रिणां निरंतरस्थिररूपाद्गार्हपत्याग्नेः प्रणीयते होमकाले होमार्थमुद्धृत्य हवनकुण्डे प्रज्वाल्यते प्रकर्षेण नीयते स्थानान्तरे पृथक्क्रियत इत्यर्थः । प्रणयनात् गार्हपत्यस्थानीयादन्तःप्रविशद्वायुरूपादपानादुद्धरणात् प्राणः बहिर्गच्छद्वायुः आहवनीयः आहवनीयोऽग्निरूपः ॥ ३ ॥

**यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति स समानः मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥**

एवमपानव्यानप्राणेषु गार्हपत्यदक्षिणाभ्याहवनीयाख्याग्नित्रयदृष्टिं समाने होतृत्वदृष्टिं विधत्ते—**यदिति** । यत् यस्मात् एतौ प्रसिद्धौ सनिःश्वासौ प्राणस्य मुखनासिकाभ्यां शरीराद्बहिरन्तर्नि... क्षरूपौ आहुती द्वित्वसंख्यासाम्यात् सायंप्रातःकाले प्रक्षेपणीय... तिद्रव्यविशेषे समं उत्कर्षापकर्षरहितं यथास्यात्तथा नयति प्रापय... उक्तहेतोः सः प्रसिद्धः समानः समानसंज्ञको वायुः होता ऋत्विगुच... शेषः । आहुत्योर्नेतृत्वस्योभयत्र साम्यादिति भावः । ननु प्राणाग्नय इत्यत्र प्राणानामग्नित्वोक्तेः कथमत्र समानस्य होतृत्वमुच्यत इति चेन्न । आ... छत्रिन्यायेनाभ्यनग्निसमुदाये लाक्षणिकत्वात् । प्रकृताग्निहोत्रस्य यजमा... **मन इति** । मनो ह वाव प्रसिद्धमन्तःकरणमेव यजमानः । सर्वव्यापार... त्वसाम्यात् यज्ञकर्तृ यजमानस्थानीयमित्यर्थः । इदानीमुदाने इष्टफलत्वदृ... **इष्टेति** । इष्टफलमेव यागफलमेव उदानः सुषुम्णासंचारी वायुः । उद... मरणद्वारा यागफलं स्वर्गं नयति । सुषुम्णायां संचारित्वात् । अतः उ... फलहेतुत्वात् । हेतुहेतुमतोरभेदविवक्षया उदान इष्टफलमित्युक्तम् । सु... सुषुम्णायां मनः प्रवेशयन्सर्वफलात्मकं ब्रह्म गमयतीत्याह—**स इति** । स... एनं पूर्वोक्तं मनोरूपं यजमानं अहरहः दिनेदिने सुषुप्तिकाले ब्रह्म सत्या... णमानंदैकरसस्वभावं गमयति प्रापयति । प्राणादीनां यागाङ्गाभ्यादि... प्राणा जाग्रति नात्मेति त्वंपदार्थविवेकज्ञानवतः स्वप्ने यागः सुषुप्तौ फलमिति विवक्षितविवेकज्ञानस्तुत्यर्था इति भावः ॥ ४ ॥

यत्पृष्टं कतर एष देवः स्वप्नान्पश्यतीत्यस्योत्तरमाह—

**अत्रैष देवः स्वप्ने महिमानमनुभवति ॥ यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुश्रृणोति देश दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥**

अत्र अस्यां वागादिकरणोपरमरूपायां स्वप्नावस्थायां एषः वागादीनामुत्पत्ति-
[आ]श्रयभूतमनआत्मको देवः यद्यपि देवशब्देन क्षेत्रज्ञ एवोच्यते तस्यैव स्वतः
[अनुभवितृ]त्वं न तु मनसः तथापि तदुपाधित्वादिह मनसः देवशब्दोक्तिः। तथा च
[चै]तन्यप्रतिबिम्बबलाद्देदीप्यमानः सन् स्वप्ने स्वप्नस्थाने महिमानं स्वस्य विषयिरूपेण
[रथ]रथगिरिनद्यादिविषयरूपेण च महत्त्वमनुभवति स्वयमेव कर्तृत्वं प्राप्य
[वासना]प्रबलादवगच्छति। जीवस्यानुभवितृत्वे वक्तव्ये जीवोपाधिरूपमनसः तदुक्तिः
[अय]म्मो मनोधर्मो नात्मधर्म आत्मनि तदारोपमात्रं लोकस्येति सूचनार्था। अय-
[मनु]भवः प्रथमो न येन जाग्रदिंद्रियापेक्षः स्यात् किन्तु दृष्टस्यैवानुदर्शनादिरूप
[म]ाह—यदिति। यत् गिरिगजादिरूपं वस्तु दृष्टं जाग्रत्कालेऽनुभूतं नयनपथमागतं
दृष्टमिति पदाभ्यासो वासनाप्राबल्यसूचनार्थः। अनु जाग्रत्कालीनदर्शना-
[प]श्चात् पश्यति अवलोकयति। श्रुतमित्यत्रापि यच्छब्दोऽनुवर्तनीयः। यत्
[श]ब्दादिविषयः श्रुतं जाग्रदवस्थायां श्रोत्रेन्द्रियेणावगतं तमेव पूर्वश्रुतमेव अर्थं
[वास]नयजातं अनु पश्चात् शृणोति श्रवणकर्तेव भवति देशदिगन्तरैश्च देशैर्गृहनदी-
[नग]ादिभिर्दिगन्तरैः प्राच्यादिदिग्भिश्चकारात्कालादिभिर्निमितभूतैः प्रत्यनुभूतं
[प्र]तिदिनमधिगतं। तत्पुनः पुनः भूयो भूयः प्रत्यनुभवति प्रतिदिनं स्व-
[प्ना]नुभवं करोतीत्यर्थः। यद्देशादिनिमित्तभूतैः प्रतिवारमनुभूतं तदसकृदनुभव-
[त्य]ाह—दृष्टमिति। दृष्टम् अस्मिन् जन्मनि चक्षुषाऽवलोकितम्, अदृष्टं जन्मां-
[तरे] चक्षुषाऽवलोकितं। चकारौ प्रत्यनुभवतीति क्रियापदस्यानुवृत्त्यर्थौ। एवमग्रे-
[ऽपि] पर्य्यायत्रये बोध्यं। श्रुतं अस्मिन् जन्मनि श्रोत्रेंद्रियेण संबद्धं। अश्रुतं
[जन्मा]ंतरे श्रोत्रेंद्रियेण संबद्धं अनुभूतं अस्मिन् जन्मनि केवलमनसाऽधिगतमन-
[नुभू]तं जन्मांतरे मनसैवानुभूतम्। एतेन प्रत्यनुभूतमित्यनेन न पुनरुक्तिः। तत्रें-
[द्रिय]द्वारकानुभवस्योक्तत्वात्। अत्यन्तादृष्टे वासनाऽनुपपत्तेः। सच्च पारमार्थि-
[कोद]कादिरूपमसच्च अनृतमरीच्युदकादिरूपं। किंबहुनोक्तानुक्तंसर्वं निखिलं
[पश्य]ति अवलोकयति। सर्वः निखिलो देवतिर्यगादिरूपो मनोवासनोपाधिः
सर्वकरणात्मा मनोदेवः स्वप्नान् पश्यतीत्यर्थः॥ ५॥

कस्यैतत्सुखं भवतीत्यस्य प्रश्नस्योत्तरमाह—

**स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्वप्नान्न**
**पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं भवति॥ ६॥**

यदा यस्मिन्काले सः मनोरूपो देवः तेजसा नाडीगतपित्तेन अभिभूतः तिरस्कृतवासनः भवति वासनाऽभिव्यञ्जककर्मोपरमात्। वासनोपरमरूपसुषुप्तौ एष देवः पूर्वोक्तमनोरूपदेवः स्वप्नान् वासना पदार्थान् न पश्यति नावलोकयति। अथ तदा यत्प्रसिद्धमेतत् स्वरूप ब्रह्मानन्दं एतस्मिञ्छरीरे वर्तमानदेहे भवति यजमानस्थानीयस्य मनस पूर्वमपि विद्यमानं सत् विशेषाविज्ञानरूपविक्षेपाभावेन निवात भावत्सम्यक्प्रकाशंते नतु तदानीमेवोत्पद्यते, तदा तज्जनकाभावादिति एतेन सुषुप्त्याश्रयोऽपि मनएव। सुषुप्तावपि सूक्ष्मरूपेण मनसः दित्युक्तं ॥ ६ ॥

कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीत्यस्य प्रश्नस्य सदृष्टांतेनोत्तरमाह-

**स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते। एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७॥**

सः आत्मनि सर्वसंप्रतिष्ठात्वे प्रसिद्धो दृष्टांतः। सोम्य हेप्रियदर्श यथा येन प्रकारेण वयांसि पक्षिणोऽनेकदिग्गताः वासोवृक्षं सायंकाले वृक्षं प्राप्येति शेषः। संप्रतिष्ठन्ते सम्यक् तिष्ठन्ति। एवं यथा दृष्टांतो ह तत् वक्ष्यमाणं सर्वं निखिलं परे अविद्यातत्कार्य्यतत्संस्कारेभ्यो व्यतिरि नि स्वयंप्रकाशानन्दस्वरूपे संप्रतिष्ठते सम्यगवतिष्ठते इत्यर्थः ॥ ७ ॥

सर्वशब्दार्थमाह—

**पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाश-मात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यंच हस्तौ चादातव्यं चोपस्थश्चानंदयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गंतव्यं च मनश्च मंतव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयि-तव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥**

पृथिवी पंचीकृतात्मिका स्थूला भूमिः पृथिवीमात्रा अपंचीकृतरूपा गंधतन्मात्रा । एवमाप इत्यादि भूतचतुष्टयमपि पंचीकृतापंचीकृतरूपं बोध्यं । आपोमात्रा चेत्यत्र विभक्त्यलोपश्छांदसः । चक्षुः नेत्रेंद्रियं द्रष्टव्यं रूपात्मकविषयः । श्रोत्रं श्रोत्रेंद्रियं श्रोतव्यं शब्दात्मकविषयः । घ्राणं घ्राणेन्द्रियं घ्रातव्यं गंधात्मकविषयः । रसः रसनेंद्रियं रसयितव्यं रसात्मकविषयः । त्वक् त्वगिंद्रियं स्पर्शयितव्यं स्पर्शात्मकविषयः । वाक् वागिंद्रियं वक्तव्यं वदनात्मकं कर्म । हस्तौ पाणींद्रियं आदातव्यं आदानात्मकं कर्म । उपस्थः शिश्नेंद्रियं आनन्दयितव्यं मैथुनरूपं कर्म । पायुः गुदेंद्रियं विसर्जयितव्यं मलत्यागात्मकं कर्म । पादौ पादेंद्रियं गंतव्यं गमनात्मकं कर्म । मनः देवशब्देन पूर्वोक्तं, मंतव्यं तद्विषयः । बुद्धिः निश्चयात्मिका बोद्धव्यं तद्विषयः । अहंकारः अभिमानरूपमन्तःकरणं अहंकर्तव्यं तद्विषयः । चित्तं चेतनावदंतःकरणं चेतयितव्यं तद्विषयः । तेजः त्वगिन्द्रियाद्भिन्नश्चर्मगतः प्रकाशः शोभा-कांति—द्युति—नामकः । विद्योतयितव्यं तन्निर्भास्यं चर्मैव । प्राणः क्रिया-शक्तिसूत्ररूपः विधारयितव्यं संग्रथनीयं प्राणव्यतिरिक्तं निखिलं विश्वं सूत्रात्मनि प्राणे ओतं प्रोतं चेत्यर्थः । द्वाचत्वारिंशचकारास्तु द्वाचत्वारिंशच्छब्दैः सह पर आत्मनि संप्रतिष्ठते इति पूर्ववाक्यस्यानुषंगार्थाः । तथा च पृथिव्यादिकं विधारयितव्यांतं जीवोपाधिभूतं कार्यकरणविषयजातं सर्वमुक्तम् । उपहितचिद्रूपो जीवोपि प्रतिबिंबसूर्य्यइव सूर्य्ये उपाधिलयात्स्वरूपभूते परात्मनि संप्रतिष्ठत इति पूर्वोत्तरवाक्यान्वय इति भावः ॥ ८ ॥

न केवलं पृथिव्यादिजडप्रपंच एव परेऽक्षरे आत्मनि संप्रतिष्ठते किंतूपाधिविशिष्टो जीवोऽपि तस्मिन्संप्रतिष्ठत इत्याह—

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मंता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परे आत्मनि संप्रतिष्ठते ॥ ९ ॥**

एषहीति । हिशब्दश्चार्थे । स च परे आत्मनि संप्रतिष्ठत इति वाक्यानुवृत्त्यर्थः । एषः वक्ष्यमाणलक्षणः द्रष्टा चाक्षुषज्ञानाश्रयः स्प्रष्टा । त्वाचज्ञानाश्रयः । श्रोता श्रोत्रजन्यज्ञानाश्रयः । घ्राता घ्राणजन्यज्ञानाश्रयः । रसयिता रासनज्ञानाश्रयः । मंता-मननकर्ता । बोद्धा बोद्धृत्वाश्रयः । कर्ता कर्तृत्वा-

श्रयः । विज्ञानात्मा विज्ञायतेऽनेनेति विज्ञानं । तदात्मा तत्स्वभावः तृरूप इत्यर्थः । पुरुषः कार्य्यकरणोपाधिपूर्णत्वात्पुरुषः । स च जलादिप्रतिबिंबस्य सूर्य्यादिप्रवेशवज्जगदाधारेऽशेषे परेऽक्षरे आत्मनि संप्रतिष्ठ इत्यर्थः ॥ ९ ॥

तदेकत्वविदः फलमाह—

**परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते । यस्तु सोम्य सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥ १० ॥**

परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यतेऽभेदेनैव प्राप्नोतीत्यर्थः । पूर्वोक्तजागरणाद्यवस्थानामन्यस्य धर्मत्वोक्त्या शोधितात्मानमनूद्य तद्ब्रह्मैक्योक्तिपूर्वकं तज्ज्ञानस्य फलमाह—**सयइति** । अत्र सः यः पदाधिकारिणो दुर्लभत्वं सूच्यते । यच्छब्दद्वयसार्थक्याय वाक्यभेदश्च कार्यः तथाहि ह वै प्रसिद्धं तत्पूर्वोक्तं सर्वाधारभूतं ब्रह्म अच्छायं अविद्यावर्जितं । अशरीरं नामरूपसर्वोपाधिशरीररहितं । अलोहितं । लोहितादिगुणवर्जितं । यत एवमतएव शुभ्रं शुद्धं । अक्षरं विनाशरहितं कश्चिदेव विरलो वेदयते आचार्य्योपदेशेन जानातीत्येकं वाक्यं । हे. प्रियदर्शन गार्ग्य ॥ यस्तु योऽधिकारी वेदयते सः वेत्ता सर्वमहमस्मीति जानातीति सर्वज्ञः सन् सर्वो भवति अस्मिन्देहे वर्तमानोऽपि सर्वरूपो भवतीति द्वितीयं वाक्यं । तत्राद्यवाक्ये अच्छायादिविशेषणत्रयेण कारणसूक्ष्मस्थूलशरीरत्रयनिराकरणादवस्थात्रयराहित्यानुवादः । शुभ्रमिति विशेषणेन तमेव तुरीयमनूद्य तस्याक्षरसामानाधिकरण्येनैक्यमुक्तं विवेकः । ततः तत्र सर्वाधाराऽच्छायादिरूपात्मज्ञानात्पुरुषार्थप्राप्तौ श्लोकः वक्ष्यमाणमंत्रो भवतीत्युक्तार्थसंग्राहकः ॥ १० ॥

**विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठंति यत्र । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥**

**इति चतुर्थः प्रश्नः ॥ ४ ॥**

विज्ञानात्मा अंतःकरणविशिष्टात्मा सर्वैः निखिलैः देवशब्दाभिधेयैः चक्षुरादिभिः करणैः सह प्राणाः वायवः । पंचभूतानि पृथिव्यादीनि स्थूलानि सूक्ष्माणि च यत्र यस्मिन्नक्षरे संप्रतिष्ठंति प्रविशंति । तत् उक्तमक्षरं हे सोम्य यस्तु योऽधिकारी वेदयते सः सर्वज्ञः सर्वमेवाविवेश आत्मत्वेनाविशति प्रवेशं करोतीति यावत् । इतिशब्दो मंत्रसमाप्त्यर्थः ॥ ११ ॥

इति चतुर्थः प्रश्नः ॥ ४ ॥

---

## अथ पंचमः प्रश्नः ।

एवं चतुर्थप्रश्नेन तत्त्वंपदार्थशोधनपूर्वकवाक्यार्थज्ञानेनोत्तमाधिकारिणः परविद्ययाऽक्षरप्राप्तिरुक्ताऽथ यस्य वैराग्यमांद्येनाधिकारमांद्यं तस्य ब्रह्मलोकप्राप्तिक्रमेणाक्षरप्राप्तये ॐकारोपासनमाह—

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ ।**
**स यो ह वै तद्भगवन्मनुष्येषु प्रयाणांतमोंकारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति ॥ १ ॥**

अथ सौर्य्यायणीगार्ग्यप्रश्नानंतरं ह प्रसिद्धं एनं पिप्पलादं शैब्यः सत्यकामः प्रपच्छ पृष्टवान् । हे भगवन् मनुष्येषु मनुष्याणां मध्ये स यः कश्चनापि त्रैवर्णिकः ह वै अधिकारिगुणैः प्रसिद्धः तत् दुष्करं यथा स्यात्तथा प्रयाणांतं मरणपर्य्यंतं यावज्जीवमित्येतदोंकारं प्रणवं अभिध्यायीत आभिमुख्येन चिंतयेत् । अभितः श्रद्धाभक्तिपूर्वकं ध्यानं कुर्य्यादिति यावत् । सः ध्याता तेन ॐकारध्यानेन कतमं वाव विद्याकर्मफलभूतेषु अनेकलोकेषु कं एव लोकं उपासनाफलभूतं जयति प्राप्नोति । इति एवं पप्रच्छेति संबंधः ॥ १ ॥

**तस्मै स होवाच ॥ एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥**

तस्मै सत्यकामशैब्याय ह प्रसिद्धः सः पिप्पलादः उवाच उक्तवान् । किमुक्त-

वानित्यत आह एतदिति । सत्यकाम हे सत्यकाम शैब्य एतद्वै एष निरतिशयं सत्यादिलक्षणं ब्रह्म अपरं हिरण्यगर्भाख्यं कार्य्यात्मकं प्रथम चकाराभ्यामन्यदप्यनुक्तं तत्सर्वं एष एवेति सूचितम् । एष क इत्यत यदिति । यत् यः सर्ववेदेषु प्रसिद्धः ॐकारः प्रणवः तस्मात् ॐकार परब्रह्मरूपत्वात् विद्वान् परापरब्रह्मरूपत्वेनोंकारस्य ज्ञानवान् एतेनैव प्रसिद्धेनोक्तोंकारेणैव आयतनेन आलंबनेन एकतरं स्वाभिप्रेतं परं ब्रह्म अन्वेति विधिवत्कृतोपासनानंतरं प्राप्नोतीत्यर्थः ॥ २ ॥

विधित्सितस्य त्रिमात्रोंकारोपासनस्य स्तुत्यर्थमेकदेशोपासनादपि फलं भवति नत्वंगवैगुण्यप्रयुक्ता दुर्गतिरित्याह—

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदित- स्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्य- लोकमुपनयंते स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥**

अकार उकारो मकार इति तिस्रो मात्राः । तासामग्निवायुसूर्य्याः ब्रह्मविष्णुमहेश्वरा देवताः । अधिदैवतं भूर्भुवःस्वः स्थानानि । जाग्रत्स्वप्नसुषुप्त्याख्यानि । ऋग्यजुःसामानि वेदा इति शाखांतरगत मात्राविभागानभिज्ञः सः अभिध्याता यदि एकमात्रं एकावयवं अभिध्यायीत अभिध्यायेत् ॥ सः एकमात्राऽभिध्याता तेनैव एकमा नेनैव संवेदितः उपास्यैकमात्रासम्यक्साक्षात्कारवान्सन् तूर्णमेव जगत्यां पृथिव्यां अभिसंपद्यते पृथिवीलोकं प्राप्नोतीति यावत् । तं संप्राप्तमुपासकं ऋचः ऋग्वेदाभिमानिन्यः देवताः मनुष्यलोकं मनु उपनयंते प्रापयंति । सः ऋगभिमानिभिर्मनुष्यशरीरं प्राप्तः । तत्र शरीरे तपसा स्वधर्माचरणादिना ब्रह्मचर्य्येणाष्टविधमैथुनवर्जनेन श्रद्धया क्तार्थे आस्तिक्यबुद्ध्या संपन्नः संयुक्तः सन् महिमानं विभूतिं अनुभवति साक्षात्करोति राजश्रियं प्राप्नोतीति यावत् ॥ ३ ॥

**अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभू- तिमनुभूय पुनरावर्त्तते ॥ ४ ॥**

अथ पुनः यदि केनचित्पुण्यवशेन द्विमात्रेण द्वितीयमात्रमुकारं अभिध्यायीति पूर्वेण संबंधः । तदभिध्यानं ध्येयाकारतादात्म्याभिमानपर्य्यंतमित्याह—नसीति । मनसि संपद्यते मनःपदेन मनःपरिणामस्वप्नाभिन्नतया श्रुत्यंतरसिद्ध उकारो लक्षते तस्मिन्नुकारे एकाग्रतया तदात्मभावं गच्छति । सः मनसि पन्नो मृतः सन् अंतरिक्षं पृथिवीद्युलोकमध्यदेशमंतरिक्षस्थं सोमलोकं म्यं देहं मानुषानंदादधिकानंदं पित्रादिदेहं यजुर्भिः यजुरभिमानिभिः न्नीयते प्राप्यते । स सौम्यदेहं प्राप्तः उपासकः सोमलोके चंद्रलोके भूतिं परमैश्वर्य्यं अनुभूय साक्षात्कृत्य भुक्त्वा इति यावत् ॥ पुनः यः आवर्तते भूलोकमागच्छति । स्वकर्मानुसारेण मनुष्यादिदेहं प्राप्नोत्यर्थः । अत्र केचित्तु स यदीत्यादिर्यः पुनरित्यंतग्रंथो न स्तुतिपरः । कैन्तु उक्तफलाय अकारे विश्वाभिन्नविराडुपासनं, उकारे तैजसाभिन्नहैरण्यगर्भोपासनं च विवक्षितं । मनःशब्देन स्वप्नाभिमानी हिरण्यगर्भो लक्षित इत्याहुः । दीपिकाकारेण तु मात्राद्वयस्य मिलितस्योपासनं मनसि संपद्यते इत्यस्यैकाग्रतया मनसा ध्यायेदिति व्याख्यातं ॥ ४ ॥

एवमोंकारं स्तुत्वा तदुपासनमाह—

**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत । स तेजसि सूर्य्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते । एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ॥ तदेतौ श्लोकौ भवतः ॥ ५ ॥**

त्रिमात्रेणेत्यादौ तृतीया द्वितीयार्थे । यः पुनः यस्तु प्रसिद्धोऽभिध्याता एतं ओंकारं त्रिमात्रेण त्रिमात्रात्मकं । ओमित्येतेन ओमित्याकारकं । अक्षरेण अक्षरं वर्णात्मकं परं सूर्य्यांतरगतं पुरुषं परिपूर्णं अभिध्यायीत पुरुषाभेदेन चिंतयेत् सः अभिध्याता तेजसि तेजोमंडले सूर्य्ये शोभनगतिमति संपन्नः सम्यक् प्राप्तो भवतीति शेषः । अत्र सूर्य्ये संपत्तिस्तु ध्यायमानस्य तादात्म्या-

भिमानः मृतस्य तूर्ध्वगतिरिति विवेकः । एवं सूर्य्यं प्राप्त उपासकः
निर्मुक्तो भवतीति दृष्टांतपूर्वकमाह यथेति । यथा येन प्रकारेण पादोदर
मेव पादा यस्य स पादोदरः सर्पः त्वचा जीर्णकंचुकेन विनिर्मुच्यते
निःशेषतो मुक्तो भवति । एवं तथा तेनैव प्रकारेण ह वै प्रसि
उपासकः सूर्य्यं प्राप्तः पाप्मना सर्पत्वक्स्थानीयेनाऽशुद्धिरूपपापेन वि
विशेषतो निःशेषेण मुक्तो भवति । सः उपासकः पापवियुक्तः सन्
गीतिप्रधानसामवेदाभिमानिभिः उन्नीयते ब्रह्मलोकं उत् सूर्य्यादूर्ध्वं
हिरण्यगर्भस्य स्थानं सत्याख्यं नीयते प्राप्यते । सः उपासकः ब्रह्मलोके
एतस्मात् सत्यलोकनिवासिनो हिरण्यगर्भात् जीवघनात् सर्वेषां जीवा
पिंडीभूतात् परात् स्थावरजंगमेभ्यः उत्कृष्टात् परं उत्कृष्टं पुरिशयं श
रानुप्रविष्टं पुरुषं परिपूर्णपरमात्माख्यं ईक्षते त्रिमात्रोंकारं ध्यायमानः
त्करोति । ब्रह्मलोके उत्पन्नब्रह्मसाक्षात्कार उपासको विदेहकैवल्यं
तीत्यर्थः । तदेतस्मिन्नुक्तार्थे एतौ वक्ष्यमाणौ श्लोकौ मंत्रौ भवतः स्तः

तत्र यः पुनरेतमित्यादिनोक्तेऽर्थे आद्यमंत्रं योजयति—

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्य-
सक्ता अनविप्रयुक्ताः ॥ क्रियासु बाह्याभ्यंतर-
मध्यमासु सम्यक्प्रयुक्तासु न कंपते ज्ञः ॥ ६ ॥**

तिस्रः त्रिसंख्याकाः मात्राः अकारोकारमकाराख्या ॐकारस्य मात्राः
मत्यः मृत्युर्मरणं विद्यते यासां ता मृत्युमत्यः मृत्युगोचरा इति यावत् ।
ब्रह्मदृष्टिं विना तदुपासकानां मृत्योरनतिक्रमात् । ब्रह्मदृष्टिरुत्कर्ष
न्यायानुरोधादोंकारेऽकारादिमात्रासु प्रत्येकं वा ब्रह्मदृष्टिरेव वि
लोकेषु सामोपासीतेत्यादाविव निकृष्टे ओंकार एव ब्रह्मदृष्टिः कर्तव्या
भावः । प्रयुक्ता ब्रह्मज्ञानंविना स्वातंत्र्येण ध्यानाय प्रकर्षेणावगताः ।
ऽन्यसक्ताः परस्परसंबद्धाः संहिताविशिष्टा ॐइत्येवंरूपाः । अन्योऽन्य
त्वमाह अनविप्रयुक्ताः विशेषेणैकस्मिन्नर्थे ध्यानकाले संबद्धाः विप्रयुक्ता
न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ताः अनविप्रयुक्ताः । विभागेनैकै
न्विषये प्रयुक्ता न भवंति क्वचिदप्यप्रयुक्ता अपि न भवंति किंतु स

यमेनैव प्रयुक्ता इति नकारद्वयस्यार्थः। ब्रह्मत्वेन दृष्टा एवेत्यवधारणलार्थं वा नकारद्वयमित्यर्थः। एकस्मिन् ध्यानकाले तिसृषु क्रियासु कर्मरूपासु बाह्याभ्यंतरमध्यमासु जाग्रत्स्वप्नसुषुप्तिषु। जाग्रत्पुरुषो वैश्वानराभिन्नो विश्वः। स्थूलशरीरं जागरितं च तत्स्थानं। स्वप्नपुरुषस्तु हिरण्यगर्भाभिन्नस्तैजसस्तत्स्थानं लिंगशरीरं स्वप्नश्च। सुषुप्त ईश्वरात्मा प्राज्ञः तत्स्थानमव्याकृतं सुषुप्तिश्च। तेषां जाग्रदादिस्थानकपुरुषाणामकारादिमात्रातादात्म्येन ध्यानरूपासु सम्यक् प्रयुक्तासु अहं ब्रह्मास्मि एता अपि ब्रह्माभिन्ना इति सम्यक् ज्ञात्वा प्रकर्षेण कृतासु। अन्योऽन्यसक्ता अनविप्रयुक्ताः तिस्रोमात्राः प्रयुक्ताश्चेत्स्युः ज्ञः तिस्रो मात्रा इत्यादिमंत्रोक्तोंकारस्य विभागवित् न कंपते न चलतीत्यन्वयः। अनेन मंत्रेण सर्वात्मके परब्रह्मणीश्वरे ॐकाराभेदेन ध्यानमुक्तमिति भावः॥ ६॥

स्वस्य सर्वात्मत्वेन स्वव्यतिरिक्ताभावाच्चलनं न संभवतीत्यर्थसंग्रहार्थं तृतीयं मंत्रं योजयति—

**ऋग्भिरेतं यजुर्भिरंतरिक्षं स सामभिर्यत्तत्कवयो वेदयंते। तमोंकारेणैवायतनेनान्वेति विद्वान्। यत्तच्छांतमजरममृतमभयं परं चेति॥ ७॥**

## इति पञ्चमः प्रश्नः॥ ५॥

स ओंकारमात्रात्रयविभागवित्। ऋग्भिः पादबद्धमंत्राभिमानिभिः एतं मनुष्यलोकं अन्वेति अनुगच्छतीति क्रियायाः सर्वत्र संबंधः कर्त्तव्यः। यजुर्भिः अविवक्षितछंदोमंत्राभिमानिभिः अंतरिक्षं अंतरिक्षस्थसोमलोकमन्वेति। यत्तत्प्रसिद्धं कवयः क्रांतदर्शिनः मेधाविनो विद्वांस एव वेदयंते विजानंति न त्वविद्वांसः। तं ब्रह्मलोकं सामभिः गीतिप्रधानमंत्राभिमानिभिरन्वेति। किं बहुना यत् वेदांतप्रसिद्धं शांतं जाग्रदादिसर्वप्रपंचविवर्जितं रागादिदोषैर्वा। अतएवाजरं जरारहितं। अतएव अमृतं मृत्युवर्जितं। यस्माज्जरादिविक्रियारहितं अतो अभयं द्वितीयाभावाद्भयशून्यं। यस्मादेवाभयं तस्मात्परं निरतिशयं। तद्ब्रह्माक्षरं ॐकारेणैवायतनेन ॐकाररूपगमनसाधने-

नान्वेति। विद्वान् तत्रोत्पन्नब्रह्मसाक्षात्कारः। चकारादुक्तमृग्यजुःसा-मपरमपि। इतिशब्दो मंत्रद्वयसमाप्त्यर्थः॥ ७॥

इति पञ्चमः प्रश्नः॥ ५॥

---

अथ षष्ठः प्रश्नः।

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौशल्यो राजपुत्रो मामुपेत्यैतं प्रश्न-मपृच्छत॥ षोडशकलं भारद्वाज पुरुषं वेत्थ त-महं कुमारमब्रुवं। नाहमिमं वेद। यद्यहमिममवे-दिषं कथं ते नावक्ष्यमिति। समूलो वा एष परि-शुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृतं वक्तुं। स तूष्णीं रथमारुह्य प्रवव्राज तं त्वा पृ-च्छामि कासौ पुरुष इति॥ १॥**

पूर्वमात्मन एष प्राणो जायते इति कारणत्वेनोक्तस्य तमोंकारेणै-नान्वेतीत्योंकारप्राप्यत्वेन चोक्तस्य परब्रह्मणः शरीरांतःस्थत्वोक्तिद्वारा-ग्रूपत्वेन ज्ञानायायं प्रश्न आरभ्यते। वृत्तांतोक्तिस्तु दुर्लभेयं विद्या-तत्प्राप्त्यर्थं यत्नः कर्तव्य इति ख्यापनार्था। **अथेति**। अथ शैब्यस-प्रश्नानंतरं ह प्रसिद्धं एनं पिप्पलादं सुकेशा भारद्वाजः पप्रच्छ। हे-हिरण्यनाभः नामतः कौशल्यः कोशलायां जातः राजपुत्रः रा-क्षत्रियः मां भारद्वाजं उपेत्य विधिवत्समीपमागत्य एतं वक्ष्यमाणं प्र-व्यार्थं अपृच्छत् पृष्टवान्। षोडशकलं षोडशसंख्याका कला अवयवा-द्याऽध्यारोपिता यस्मिन् सः षोडशकलः तं। पुरुषं परिपूर्णं हे-वेत्थ त्वं जानीषे। तं एवं पृच्छंतं हिरण्यनाभं कुमारं राजपुत्रं प्र-अहं भारद्वाजसंज्ञकोऽहं अब्रुवं उक्तवानस्मि इमं षोडशकलं पु-भारद्वाजनामा न वेद न जानामि। विज्ञानवता योग्याय शिष्या-वक्तव्यैवानृतं तु कदापि न वाच्यमित्याशयवानाह—**यदीति**। य-न्तरे कथंचिदहं भारद्वाज इमं उक्तपुरुषं अवेदिषं विदितवानस्मि-केन प्रकारेण ते तुभ्यमत्यंतशिष्यगुणवतेऽधिकारिणे नावक्ष्यं

ष्यामि तस्मान्न जानाम्येवेत्यर्थः इति एवमब्रुवमिति पूर्वेणान्वयः। अविसितमिव तमालक्ष्य तद्विश्वासार्थं पुनराह समूल इति। यः पुरुषः नृतं मिथ्यावचनं अभिवदति सर्वतो ब्रूते एषः मिथ्यावादी समूलो मूलेन शुभकर्मविद्यादिना सहित एव परिशुष्यति सर्वतः शोषमुीहलोकपरलोकाभ्यां सुखशून्यो भवतीत्यर्थः। तस्मात् अनृतवादिनोनेष्टप्राप्तिज्ञानवत्त्वात् अनृतं अयथाभूतार्थं वक्तुं भाषितुं नार्हामि अहं ग्यो न भवामि। एवं मद्वाक्यं श्रुत्वा सः राजपुत्रः तूष्णीं साध्वसाधु वेति वनमनुक्त्वैव रथं स्वयानं आरुह्य आरूढो भूत्वा प्रवव्राज स्वनगरंप्रति घ्रमेव जगाम तं राजपुत्रेण पृष्टं षोडशकलं पुरुषं त्वा त्वां पिप्पलादं ते पृच्छामि अहं पृष्टवानस्मि क्व कुत्र प्रदेशे असौ षोडशकलः पुरुषः षशब्दाभिधेयः। इति एवं पृष्टवते ॥ १ ॥

**तस्मै स होवाच इहैवांतःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवंतीति ॥२॥**

तस्मै सुकेशाय भारद्वाजाय सः पिप्पलादः ह किल उवाच उक्तवान् हे म्य प्रियदर्शन इहैव अस्मिन्नेव शरीरे देहे अंतः हृदयपुंडरीकाकाशमध्ये : त्वया पृष्टः पुरुषः परिपूर्णतया वर्तत इति शेषः यस्मिन्पुरुषे एताः क्ष्यमाणाः षोडशषोडशसंख्याकाः कलाः प्राणाद्याः प्रभवंति उत्पद्यंते वर्तंते येंते चेत्यर्थः। इति एवमुवाचेति संबधः ॥ २ ॥

षोडशकलाभिरुपाधिभूताभिर्निष्कलः पुरुषः सकल इवाऽविद्यावशेन क्ष्यत इति संक्षेपेणोक्तमर्थमध्यारोपापवादाभ्यां विस्तरेणैवाह—

**स ईक्षां चक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥**

सः षोडशकलः पुरुषः ईक्षां ईक्षणं दर्शनं चिंतनं वा चक्रे कृतवानित्यर्थः। कथं चिंतनं कृतवानित्यत आह—**कस्मिन्निति** कस्मिन्नेव कर्तृशेषे उत्क्रांते देहादुत्क्रमणे कृते सति अहं स्वयंप्रकाशानंदात्मा उत्क्रांतो भविष्यामि शरीराद्बहिर्गतः स्यां कस्मिन् वा कस्मिन्नेव शरीरे प्रतिष्ठितेऽवस्थिते सति प्रतिष्ठास्यामि अहं प्रतिष्ठितः स्यां इति एवं विचिंत्य ॥ ३ ॥


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

  

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवींद्रियम् ॥ मनोऽन्नं अन्नाद्वीर्यं तपो मंत्राः कर्म लोकालोकेषु च नाम च ॥ ४ ॥**

प्राणस्य क्रियया आत्मनि क्रियामवलोक्य च सः उक्तपो पुरुषः प्राणं आत्मन उत्क्रान्त्याद्युपाधिभूतं समष्टिप्राणं असृजत तवान् प्राणात् प्राणसृष्टेरनंतरं श्रद्धां सर्वप्राणिनां शुभकर्मप्रवृत्ति मास्तिक्यबुद्धिं असृजतेत्यनुषंगः । खं वायुर्ज्योतिरापः पृथिवी वायुरित्यादिप्रथमा द्वितीयार्थे । प्राणमसृजतेति द्वितीययोपक्रमात् काशादीनि स्थूलानि पंचमहाभूतानि असृजतेत्यनुषंगः । इंद्रियं दिज्ञानेंद्रियपंचकं वागादिकर्मेन्द्रियपंचकं च मनः अंतःकरणं च इदमत्र बोध्यं प्राणस्त्वपंचीकृतसूक्ष्मनंतरसृष्टः । इंद्रियमनसोरपंची कार्य्यत्वेपि स्थूलभूतकार्य्यशरीराधिष्ठितयोरेव स्वकार्य्यक्षमत्वात् तानंतरत्वोक्तिरिति । अन्नं व्रीहियवादिलक्षणं । अन्नात् अद्यमाना दिरूपात् वीर्य्यं शरीरेंद्रियसामर्थ्यं सर्वकर्मप्रवृत्तिसाधनभूतं । त चित्तविशुद्धिसाधनं शरीरशोषणादिरूपं । ततश्च मंत्राः कर्मसा ऋग्यजुःसामाथर्वांगिरसः । ततः कर्म अग्निहोत्रादिलक्षणं । ततो कर्मफलभूताः सोमलोकाद्याः । लोकेषु चोक्तसोमलोकादिषु प्राणिनां च । नाम च देवदत्तयज्ञ दत्तइत्यादिलक्षणं चासृजतेत्यर्थः ॥

एवमात्मप्रतिपत्त्यर्थमध्यारोपमुक्त्वा तदपवादं दृष्टांतपूर्वकमाह—

**स यथेमा नद्यः स्यंदमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छंति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते ॥ एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छंति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥**

सः दृष्टांतः यथा येन प्रकारेण इमाः प्रत्यक्षाः नद्यः गंगायमुनाद्याः सरितः ...दमानाः चलंत्यः समुद्रायणाः समुद्रे अयनं गमनं यासां ताः तथा। ...मुद्रं जलनिधिं प्राप्य गत्वा अस्तं अदर्शनं गच्छंति प्राप्नुवंति तासां समुद्रे-...संगतानां नामरूपे नाम गंगादिकं रूपं शुक्लनीलादिकं नाम च रूपं च ...मरूपे। भिद्येते नश्यतः। यद्यप्यस्तंशब्देन नाशो नाभिधीयते तथापि ...दकोपाधिनामरूपयोर्नाशेपि स्वरूपस्य समुद्ररूपेण विद्यमानत्वात्। एवं ...दकोपाधिनामरूपयोर्नाशानंतरं समुद्र इत्येवं समुद्रइत्याकारः शब्दः ...च्यते प्रकर्षेण कथ्यते जनैरिति शेषः। दृष्टांतमुक्त्वा दार्ष्टांतमाह— ...वमिति। एवमेव उक्तदृष्टान्तवदेव अस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः ...र्वतः साक्षिगाः इमाः पूर्वोक्ताः षोडशकलाः प्राणाद्या नामांताः षोडशसं-...ख्याकाः। पुरुषायणाः पुरुषोऽयनं यासां ताः तथा। पुरुषं प्राप्य पुरुषा-...त्मभावमुपगम्य। अस्तं गच्छंति नामरूपतिरस्कारेणादर्शनं प्राप्नुवंति। आसां ...प्राणादिकलानां नामरूपे नाम प्राणाद्याख्या रूपं प्राणाद्याकारविशेषः। ते ...भिद्येते नश्यतः। पुरुष इत्येवं इत्याकारकएव शब्दः प्रोच्यते ब्रह्मविद्भिरिति ...शेषः। असमुद्रजातानामपि नदीनां समुद्रे लयो दृष्टः। किमुत पुरुषजानां ...कलानां पुरुषे लय इति कैमुतिकन्यायसूचनार्थश्चकारः। सः उक्तकलोपा-...दानभूतः एषः बुद्धेर्द्रष्टा अकलः वस्तुतः कलारहितः। अकलत्वादेव ...अमृतः अविद्याकृतकलानिमित्तकमरणरहितो भवतीति स्पष्टं। तत् तत्र ...पूर्वोक्तषोडशकलाऽऽधारभूते पुरुषे एषः वक्ष्यमाणः श्लोकः मंत्रः॥ ५॥

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः। तं वेद्यं पुरुषं वेदयथा मा वो मृत्युः परिव्यथा इति॥ ६॥**

रथनाभौ रथचक्रस्य मध्यप्रदेशे वर्तुलकाष्ठविशेषे अरा इव तिर्यक्काष्ठ-...विशेषाः यथा प्रवेशितास्तदाश्रया भवंति। तथा कलाः प्राणाद्याः यस्मिन्पुरुषे ...प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु स्थिताः भवंति। तं कलाऽऽधारभूतं ...पुरुषं पूर्णत्वात्पुरि शयनाद्वा पुरुषं वेद्यं वेदनीयं वेदयथाः हे शिष्याः ...मद्वचनात् यूयं विजानीथाः। वो युष्मान् मृत्युः विपरीतज्ञानरूपः। मरणं ...वा मा परिव्यथाः मा परिव्यथयतु न व्यथयत्विति यावत्। न चेद्विज्ञायेत

इतराणि शापप्रदानादीनि आचार्यैः कृतान्यपि तानि त्वया न कर्तव्यानि एतदुभयचरितानि षोडशाध्याये भगवानप्याह—'अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः' इत्यादिना 'दैवी संपद्विमोक्षाय निबंधायासुरी मता' इत्यंतेन ग्रंथेन ॥ २ ॥

आचार्यसेवायां कश्चिद्विशेषमुपदिशति—

**ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥ ३ ॥**

ये के च लोकप्रसिद्धाः ब्राह्मणाः ब्राह्मणत्वजातीयाः असच्छ्रेयांसः सत्तोऽप्यतिशयेन प्रशस्ताः तेषां उक्तलक्षणब्राह्मणानां त्वया असच्छिष्येण आसनेन आसनप्रदानपादप्रक्षालनादिशुश्रूषया प्रश्वसितव्यं श्रमापनयनं कर्तव्यं । यद्वा तेषां ब्राह्मणानामासने स्थानदाने न प्रश्वसितव्यं प्राणोच्छ्वासोपि त्वया न कर्तव्यः कुतो विवादादिकं । तैर्यदुक्तं तथैव त्वया सारग्राहिणा भवितव्यमित्यर्थः । धनादिदाने कश्चिद्विशेषमुपदिशति श्रद्धयेति श्रद्धया आस्तिक्यबुद्ध्या देयं अन्नादिकं प्रदातव्यं अश्रद्धया नास्तिक्यबुद्ध्या अदेयं न दातव्यं श्रद्धारहितस्य दानस्य लोकद्वयेप्यनुपयोगात् अतः श्रद्धायुक्तेनैव भवता देयं । श्रिया देयं धनं बह्वस्ति तद्दासा इव याचका अपि गृह्णंतु मम का क्षतिरिति श्रिया यद्दानं तच्छ्रिया दानं देयम् । ह्रिया देयं मत्समाः पुरुषाः दानं कुर्वन्ति मम त्वदानेन महती लज्जा इत्येवं लोकलज्जया च दातव्यं । भिया देयं भवोद्वेगादिभ्यो यद्दानं शास्त्रेण विहितं तस्यादाने मम प्रत्यवायः स्यादिति प्रत्यवायभीत्या दातव्यं। कार्पण्यापवादभयेन लोके दातव्यं वा । संविदा देयं यद्विज्ञानेन युक्तं तद्देयं देशकालादिविवेकेन न्यूनाधिकं दानं सर्वथा दातव्यं वित्तशाठ्यं न कार्यमित्यर्थः ॥ ३

एवमनुष्ठेयमर्थमुपदिश्यानन्तरं कर्मानुष्ठानकाले समुत्पन्नसंशयस्य निराकरणार्थं शिष्टाचारं प्रमाणयति—

**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता**

**आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्त्तेथाः॥ ४॥**

अथ पक्षांतरे यदि कदाचित् ते तव कर्मविचिकित्सा वा श्रौते कर्मणि विरुद्धार्थकवचनद्वयेन विप्रतिपत्तिदर्शितः संशयो भवति। तावदग्निहोत्रादिके श्रौते कर्मणि उदिते जुहोति अनुदिते जुहोतीति द्वयं विरुद्धार्थं श्रुतवत इदं कर्तव्यं न वेत्याकारकः सन्देहः स्याद्वा संध्यावंदनादिके च स्मार्ते कर्मणि संध्यादेवता पुरुषमूर्तिः स्त्रीमूर्तिरिति वचनद्वयेन सन्देहः स्यात्। वृत्तविचिकित्सा वा स्यात् वृत्ते कुलादौ लौकिक आचारे तत्रापि मातुलसुताविवाहे मांसभक्षणादिके च शिष्टाचार दर्शनादेवमाचरणीयं न वेत्याकारकः सन्देहो यदि स्यात् भवेत्तर्हि प्रसिद्धाः ब्राह्मणाः वेदविदः तत्र कर्मणि वृते च युक्ताः कुशलाः विचारकारिणः नित्यनैमितिकाद्यनुष्ठाने स्वयं प्रवृत्ताः तत्रापि आयुक्ता मंतास्स्वतंत्रा अवैकल्येन सम्यगनुष्ठास्याम इत्येवमभियुक्ता इत्यर्थः। अरूक्षाः तथा च रूक्षः क्रोध आग्रहो वा तेन रहिताः शान्तस्वभावा यावत् धर्मकामाः धर्ममेव कामयन्ते न तु लाभपूजादिकं एवंभूता भवेयुः तत्र कर्मणि वृते वा ते उक्ताः संमर्शादिपंचविशेषणविशिष्टाः यथा येन प्रकारेण तस्मिन्संदिग्धे विषये वर्तेरन् प्रवृत्ता भवेयुः तेन प्रकारेण तत्र कर्मणि वृत्ते च वर्तेथाः रागद्वेषौत्सुक्यादिदोषराहित्येन वर्तस्वेत्यर्थः॥ ४॥

**अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्त्तेथाः॥ ५॥**

अथ एवं संदिग्धधर्मनिर्णयोपायोपदेशानन्तरं यदि अभ्याख्यातेषु शंकया दूषितेषु पुरुषेषु तवाव्यवहार्यत्वादिसंशयः स्यादितिशेषः तर्हि तस्मिन्देशे ये ब्राह्मणाः स्युः यथा येन प्रकारेण तेषु अभ्याख्यातेषु व्यवहरेयुः तथा तेनैव प्रकारेण तेषु अभ्याख्यातेषु वर्तेथाः त्वमपि व्यवहारं कुर्वित्यर्थः। संमर्शिन इत्यादिपदपञ्चकं पूर्ववत् व्याख्येयं॥

उक्तानुशासनमुपसंहरति—

**एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् ॥ ६ ॥ ११ ॥**

एषः सत्यं वदेत्यारभ्य तथा तेषु वर्तेथा इत्यंतवाक्यसंदर्भः आदेशः श्रौतो विधिः यथा राजा स्वभृत्यमादिशति तथा वैदिको विधिरनुष्ठातारमादिशति । एषः सत्यं वदेत्यादिः उपदेशः स्मार्तो विधिः । एषा सत्यं वदेत्याद्युक्तिः वेदोपनिषत् वेदे विधिमंत्रार्थवादराशिरूपे उपनिषत् रहस्यसारभागः । एतत् सत्यं वदेत्यादिकं अनुशासनं ईश्वरस्याज्ञा 'श्रुतिस्मृती ममैवाज्ञे' इति भगवदुक्तेः । एवं उक्तप्रकारेण उपासितव्यं अनुष्ठातव्यं एवमु एवमेव च एतत् उक्तं कर्मजातं उपास्यं कर्त्तव्यं द्विरुक्तिरादरार्था उचेत्यव्ययसमुदायोऽवधारणार्थो वा । उक्तप्रकारेणैतदनुष्ठेयमेव न तु कदाचिदपि परित्यक्तुं शक्यमित्यभिप्रायः ॥ ६ ॥ इत्येकादशोऽनुवाकः ॥ ११ ॥

अध्यापनान्ते शान्तिपाठप्रकारमाह—

**शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ १ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १२ ॥**

वदिष्यामीत्यस्य स्थाने अवादिषमित्युक्तिः वदामीति तस्य विपरिणामः पूर्ववत् । आवीत् अवतु अन्यत्पूर्ववद्व्याख्येयं । द्वादशोऽनुवाकः ॥ १२ ॥

इति शीक्षावल्ली समाप्ता ॥ १ ॥

---

अथ ब्रह्मवल्ली ।

इदानीं तु वक्ष्यमाणपरविद्याप्राप्तये विघ्नप्रशमनार्थं शान्तिमंत्रमाह—

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्य्यं**

**करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥**

ह प्रसिद्धः सः परमेश्वरः नौ आवां शिष्याचार्य्यौ अवतु विद्यास्वरूपप्रकाशनेन रक्षतु । स ह प्रसिद्धः परमेश्वरः नौ आवां शिष्याचार्य्यौ भुनक्तु विद्याफलं भोजयतु । सह शिष्याचार्य्यौ परस्परं मिलित्वा वीर्य्यं विद्याकृतसामर्थ्यं करवावहै निष्पादयावहै । नौ आवाभ्यां शिष्याचार्य्याभ्यां अधीतं तेजस्वि अतिशयेन वीर्य्यवदस्तु । यद्वा तेजस्विनौ तेजस्विनोरावयोः तत्सफलमस्त्विति शेषः । मा विद्विषावहै प्रमादकृतान्यायेनाध्ययनाध्यापनदोषप्रयुक्तं परस्परं द्वेषं आवां शिष्याचार्य्यौ मा करवावहै । ॐ शान्तिः मङ्गलार्थः । शान्तिशब्दस्य त्रिर्वचनं अध्यात्मादिदोषत्रयनिवृत्त्यर्थम् ॥ १ ॥

पूर्वग्रंथे संहितादिविषयाणि कर्मभिरविरुद्धान्युपासनान्युक्तानि ... कात्मदर्शनं च व्याहृतिद्वारेण स्वाराज्यफलकमुक्तम् । न चैतावता संसारबीजस्योपमर्दनमस्तीत्याशयेन सर्वानर्थबीजाऽविद्यादाहाय निर्विशेषात्मदर्शनमुपदिशन्ती श्रुतिः शिष्यप्रवृत्तिनिमित्तभूतं प्रयोजनं तावदाह—

**ॐ ब्रह्मविदाप्नोति परम् ॥ तदेषाऽभ्युक्ता ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥**

ब्रह्मेत्यादि । ब्रह्मशब्देन बृहत्तमं किमपि वस्तूच्यते । तद्वेत्ति जानातीति ब्रह्मवित् ब्रह्मवेत्ता परं उक्तब्रह्मस्वरूपम् आप्नोति प्राप्नोति । न च परशब्देन ब्रह्मणोऽन्यद्वस्तूच्यते विदुषो वेद्यस्वरूपस्यैव प्राप्यत्वात् ... ब्रह्म वेद ब्रह्मैव भवतीति श्रुत्यन्तरे ब्रह्मण एव प्राप्यत्वोक्तेश्च । यद्यपि ... गतस्य ब्रह्मणः सर्वात्मकत्वान्नाप्त्यर्थो मुख्यः संभवति तथाप्यविद्यानिवृत्तिरूपगौणार्थ एवात्र ग्राह्यः गत्यंतराभावात् । बृहत्त्वाद्ब्रह्मेति व्युत्पत्तिबलेन किमपि बृहद्वस्त्विति प्रतीयते न तु तस्य स्वरूपविशेषः प्रतीयते ... सर्वतो व्यावृत्तस्वरूपविशेषसमर्पणे समर्थस्य लक्षणस्याभिधानेन ... धारणाय मंत्रमाह—**तदिति** । तत् तत्र ब्राह्मणवाक्योक्तेऽर्थे एषा ... अभ्युक्ता आम्नाता सत्यं ज्ञानमनन्तं ब्रह्मेति । ब्रह्मणः स्वरूपलक्षणार्थं वाक्यम् । तत्र विशेष्यं ब्रह्म सत्यादीनि च त्रीणीतरव्यावृत्त्यर्थानि विशेषणानि

विशेषणविशेष्यभावादेव तेषां समानाधिकरणतयैकविभक्त्यंतत्वं भवति । लोके यथा नीलं महत्सुगंध्युत्पलमिति । सत्यादिभिः संबध्यमानं हि ब्रह्मानृतादिभिर्व्यावृत्तं भवति । ननु यत्र विशेष्यं वस्तु विशेषणांतरैर्व्यभिचरद्वर्तते तत्रैव विशेष्यं वस्तु विशेषणैर्विशिष्यते यथोत्पलं वस्तु नीलं रक्तं चास्ति । तथा च रक्तं व्यभिचरत्सदुत्पलं नीलेन विशेष्यते नीलमुत्पलमिति । एकजातीयानेकद्रव्याणामनेकविशेषणसम्बन्धे सत्येव विशेषणानामर्थवत्त्वं भवति न त्वेकस्मिन्वस्तुनि यथाऽसावेक आदित्य इत्यत्र विशेषणांतरसम्बन्ध्यादित्यसजातीयस्यान्यस्याभावादादित्यस्य विशेषणमर्थवन्न भवति । तथा ब्रह्मणोऽद्वितीयत्वश्रवणात्तत्सजातीयब्रह्मांतरस्य व्यावर्त्यस्याभावान्नास्ति सत्यादीनामर्थवत्त्वमिति चेन्न । वस्तुतो ब्रह्मेतरेषामभावेपि जलादिगतकल्पितादित्यव्यावृत्त्यर्थं अंबरस्थः सविता सत्य इति सवितुः सत्यविशेषणस्यार्थवत्त्ववत् कल्पितानामव्याकृतभूताकाशादिब्रह्मेतरेषां सापेक्षव्यापकत्वरूपवृद्धिसत्त्वेन ब्रह्मशब्दवाच्यानां व्यावर्त्यानां सत्त्वेनौपचारिकविशेषणविशेष्यभावस्य निष्प्रत्यूहत्वात्—ननु । सजातीयविजातीयेभ्यो हि व्यावर्तकं लक्षणम् । यथा गंधवती पृथिवीत्यत्र गंधवत्त्वं भूतत्वेन सदृशाज्जलादेर्विसदृशादात्मादेश्च पृथिव्यां व्यावृत्तसाधकमिति लक्षणविशेषणयोर्भेदात्कथं लक्षणार्थं वाक्यमित्युपक्रम्य विशेषणार्थतया व्याख्यायते इति चेन्न । सजातीयविजातीयव्यावर्तकस्य लक्षणस्य विशेषणस्येव सजातीयव्यावर्तकत्वांशस्य विद्यमानतयैवात्र विशेषणत्वव्यवहारांगीकारेण सजातीयमात्रनिवर्त्तकत्वात्मकमुख्यविशेषणत्वस्याविवक्षितत्वात् । न च ब्रह्मणः स्वरूपभूतस्य सत्यादेः कथं लक्षणत्वं व्यावर्त्तकधर्मस्यैव वादिभिर्लक्षणत्वेनाभ्युपगमादिति वाच्यम् । गौरवेण धर्मत्वांशस्य तत्र प्रवेशायोगाद्व्यावर्त्तकत्वमात्रस्य स्वरूपेपि संभवात् । सत्यमिति यद्वस्तु कालत्रयेप्यव्यभिचरितं तत्सत्यं यथा मृदादि यद्वस्तु कादाचित्कं तदनृतं यथा मृत्कार्यं घटशरावादिकं तथा च श्रुतिः—'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति एवं मृदादिवत्सत्यं परमार्थभूतं ब्रह्म तद्विकारस्तु प्रपंचो मृद्विकारवदनृत एवेत्यवगम्यते । एवं च विकारस्य सत्यत्वाभावात्सत्यं ब्रह्मेति व्यपदेन ब्रह्मणो विकाराद्व्यावृत्तिर्भवतीत्यर्थः । ननु भवत्वेवं तथापि घटादिवद्वस्तुत्वादचेतनं ब्रह्म स्यादित्यत आह—**ज्ञानमिति** । ज्ञप्तिर्ज्ञानमिति

भावव्युत्पत्तिकोऽत्र ज्ञानशब्दः चिन्मात्रस्वरूपमित्यर्थः । यद्यपि ज्ञप्ति-
मात्यमन्यत्र भाव उच्यते तथाप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पत्त्या
शब्देन लक्ष्यते सत्यादिशब्देन सह ब्रह्मविशेषणत्वादिति द्रष्टव्यं स्व
जडव्यावृत्तिरप्युक्ता । ननु लौकिकज्ञानस्यानित्यत्वदर्शनाज्ज्ञान
प्यागतमंतवत्त्वमित्याशंक्याह अनन्तमिति । अन्तो देशकालवस्तुकृत
न विद्यते यस्य तदनंतं । ननु सत्यादिपदैरनृतादिव्यावृत्तेरुक्त
व्यावृत्तिरेव सत्यादिपदवाच्यत्वेनोक्ता स्यात् ब्रह्मपदमप्यनर्थकमेव
मानांतरासिद्धत्वेन तत्सत्त्वे मानाभावात् । तथा च 'मृगतृष्णांभसि स्ना
प्पकृतशेखरः । एष वंध्यासुतो याति शशशृंगधनुर्धरः' इति वाक्यवत्
सत्यादिवाक्यमिति चेन्न । मिथ्यार्थस्य रज्जुसर्पादेः सदधिष्ठानत्वदर्शना
त्वादिहेतुभिर्मिथ्यात्वेनावगतस्य प्रपंचस्याधिष्ठानत्वेन संभावितस्य
स्वरूपविशेषलक्षणार्थत्वेनोक्तस्य सत्यादिवाक्यस्यासदर्थत्वाभावात् ॥

सत्यादिपदानां विशेषणत्वेपि न सत्यादिवाक्यस्यासदर्थत्वं सत्या
नामबाधितसत्त्वस्वप्रकाशसंवेदनादिरूपस्वार्थसमर्पणेन विरोधिव्यावर्त
नृतादिव्यावृत्तिमात्रे पर्यवसानाभावात् । तथा चोक्तं सुरेश्वराचार्यैः
पद्य पदार्थं हि विरोधात्तद्विरोधिनः । पश्चादभावं जानाति वध्यघातक
॥ १ ॥ शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्म्मिणोः । मानान्तरादपो
शाब्दस्तेन स स्मृत इति ॥ २ ॥ अस्यायमर्थः । पदात् सत्या
पदार्थं सत्यत्वादिरूपं प्रतिपद्य ब्रह्मणि ज्ञात्वा पश्चात् विरोधाद्धेतो
नोऽनृतादेः अभावं व्यावृत्तिं जानाति तत्र निदर्शनं वध्यघातक
खल्वाखुभूषितां भूमिं दृष्ट्वाऽर्थान्मार्जाराभावोऽवगम्यते तद्वदित्यर्थः
किन्तदुभयमपि शाब्दमाहोस्विदन्यतरदिति तत्राह—शब्दा
तावत् प्रथमं धर्मधर्मिणोः सत्यत्वादेर्ब्रह्मणश्च सङ्गतिः सम्बन्धः
त्प्रतीयते । तावता चास्यास्तात्पर्यविषयत्वं द्योत्यते । अपोहस्तु विरो
त्तिश्च मानान्तरात् अनुपपत्तिलक्षणाज्ज्ञायते तेन अपोहस्य मानांतर
सः अपोहस्तु न शाब्दः सत्यादिशब्दजन्यो न भवतीत्यर्थः ॥
त्रयाणां किं तुल्योऽयं न्यायो वर्तते इति चेन्न । अनंतशब्दः
तरव्यावर्त्तकत्वेन ब्रह्मविशेषणम् । नहि यथा

प्रतीयते । तथा सत्यं ज्ञानमित्यत्रानृताद्यभावः प्रतीयते अपि तु स्वार्थसमर्पण-व्यवधानेन । उक्तं च वार्तिककृद्भिः तत्रानंतोऽतवद्वस्तुव्यावृत्त्यैव विशेषणं स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणे इति ॥ १ ॥ तत्र सत्यादिषु मध्ये परिशिष्टौ सत्यज्ञानशब्दौ प्रनाड्या व्यवधानेन इति वार्तिकपदानामर्थः । यद्यपि सत्यं ब्रह्मेत्युक्ते जाड्यव्यावृत्तिः परिच्छेदव्यावृत्तिश्च लभ्यते जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वात् । ज्ञानं ब्रह्मेत्युक्ते चानृतपरिच्छेदव्यावृत्तिर्लभ्यते स्वप्रकाशस्य बाधाविषयत्वात् परिच्छेदग्राहकप्रमाणाविषयत्वाच्च । एवं चैकं वैकल्पिकं लक्षणमदुष्टं भवति । तथापि मन्दमतिव्युत्पत्त्यर्थं समुच्चितं लक्षणं स्यादिति द्रष्टव्यम् ॥

**यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेति ॥ १ ॥**

एवमुक्तलक्षणं ब्रह्म परमे स्थितिस्थानत्वादुत्कृष्टे व्योमन् व्योमनि हार्दाकाशे या बुद्धिरूपा गुहा तस्यां गुहायां निहितं स्थितं अभिव्यक्तं ब्रह्म योऽधिकारी वेद अहं ब्रह्मास्मीति जानाति स विद्वान् ब्रह्मणा सत्यज्ञानादिरूपेण विपश्चिता सर्वज्ञरूपेणाभिन्नः सर्वान् निखिलान् कामान् काम्यमानभोगान् सह युगपदेव अश्नुते भुंक्ते सर्वानंदराशिभूतं ब्रह्मानन्दमश्नुवानस्तल्लेशभूतान् सर्वकामानपि युगपदश्नुत इत्यर्थः । इतिशब्दो मंत्रसमाप्त्यर्थः ॥ १ ॥

ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितोऽर्थः संक्षेपतो मंत्रेण व्याख्यातः । पुनस्तमेव विस्तरेण वक्तुमुत्तरग्रंथ आरभ्यते—

**तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः वायोरग्निः । अग्नेरापः अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः ॥**

तस्मात् व्यवहितब्राह्मणवाक्येनोक्तात् एतस्मात् सत्यादिमंत्रेणोक्तात् आत्मनः प्रत्यग्रूपात् ब्रह्मणः आकाशः शब्दगुणो भूताकाशः संभूतः समुत्पन्नः । आकाशात् आकाशभावापन्नात्परमात्मनः वायुः शब्दस्पर्शद्विगुणो वायुः संभूत

इत्यनुषंगः । वायोः उक्तलक्षणात् अग्निः शब्दस्पर्शरूपत्रिगुणोऽग्निः अग्नेः उक्तरूपात् आपः शब्दस्पर्शरूपरसचतुर्गुणकानि जलानि सं अद्भ्यः उक्तलक्षणाभ्यः पृथिवी शब्दस्पर्शरूपरसगंधपंचगुणवती भूमिः पृथिव्याः उक्तरूपायाः ओषधयः फलपाकांता व्रीहियवादिरूपाः ओषधीभ्यः व्रीहियवादिभ्यः अन्नं ओदनादिरूपं संभूतं । अन्नात् तादुक्तान्नाद्रेतो वीर्य्यं रेतसः वीर्य्यात् पुरुषः शिरःपाण्यादिमान् शेषः स्थूलदेहः संभूतः । सः अन्नाज्जायमानः वै प्रसिद्धः एषः सर्व पुरुषः शिरःपाण्यादिमान् स्थूलदेहः अन्नरसमयः अन्नरसविकारः । पञ्चकोपन्यासं दृष्टान्तेनाह यथा लोके कश्चिच्चन्द्रं दिदर्शयिषुः चंद्रत्वेन बोधयति । बोद्धा च दिगंतराणि त्यक्त्वा शाखाग्रं पश्यन् चन्द्रं पश्यति । तथा श्रुतिरपि पूर्वोक्तब्रह्मबुबोधयिषुः कोशपञ्चकं त्वेन दर्शयति ततश्च दिदृक्षुः पूर्वपूर्वकोशेष्वात्मबुद्धिं परित्यज्य सर्व ष्ठानभूतं सर्वांतरतमं ब्रह्माहमस्मीति द्रक्ष्यतीत्यभिप्रायः ॥

तस्य दिदृक्षोश्चित्तैकाग्र्यसिद्ध्यर्थं कोशेषु पक्षिरूपत्वेनोपासनं विध

**तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥ इति प्रथमोऽनुवाकः**

तस्य अन्नरसमयस्य पुरुषस्य इदमेव शिरस्त्वेन प्रसिद्धमेव शिरः शिरस्येव शिरोदृष्टिः कर्त्तव्येत्यर्थः । अयं प्रसिद्धः पूर्वाभिमुखस्य दक्षिणो दक्षिणः पक्षः दक्षिणः छदः अयं प्रसिद्धः सव्यो बाहुः उत्तरः पक्षः पक्षः अयं बाहुद्वयमध्यमो देहभागः आत्मा सर्वाङ्गानामात्मभूतः मध्यं मंगानामात्मेति श्रुतेः । इदं प्रसिद्धं नाभेरधोभागरूपं पुच्छं पक्षिपुच्छं पुच्छं प्रतिष्ठा प्रतितिष्ठत्यनयेति प्रतिष्ठा स्थितिसाधनभूतमित्यर्थः । तत् ब्राह्मणोक्तेऽन्नमयात्मन्यर्थे एषः वक्ष्यमाणः श्लोकः मन्त्रो भवति । इति प्रथमोऽनुवाकः ॥ १ ॥

**अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीं श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि**

**यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मा-त्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । ये-ऽन्नं ब्रह्मोपासते ॥**

अन्नात् रसबीजभावापन्नात् समष्टिविराडात्मकाद्वा वै प्रसिद्धाः प्रजाः [स्]थावरजङ्गमरूपाः प्रजायन्ते प्रकर्षेणोत्पद्यन्ते याः काश्च प्रसिद्धाप्रसिद्धरू[प]ाश्च पृथिवीं श्रिताः पृथिवीमाश्रिताः ताः सर्वा अन्नादेव प्रजायन्त इति [पू]र्वेणान्वयः । अथो अपि अन्नाज्जाता अन्नेनैव अदनीयरूपेणौदनाद्यात्मकेनैव [ज]ीवन्ति प्राणान्धारयन्ति वर्द्धन्त इत्यर्थः । अन्ततः अन्ते जीवनहेतुभूतकर्म-[प]रिसमाप्तौ । अथो अपि एनत् अन्नं अपियन्ति । अत्र अपिशब्दः प्रतिशब्दार्थे[य]ः । प्रतिगच्छन्ति पृथिव्यात्मकान्नं प्रति लयं प्राप्नुवन्तीति यावत् । हि यस्मात् [भू]तानां प्राणिनां मध्ये अन्नं समष्ट्यात्मकं ज्येष्ठं सकलप्रजोत्पत्तिहेतुत्वात् [प्र]थमोत्पन्नं तस्मात् ज्येष्ठत्वादेव हेतोः सर्वौषधं सर्वरोगात्मिकायाः क्षुधाया [अ]पहारकत्वात्सकलभैषजरूपं उच्यते कथ्यते मनीषिभिरिति शेषः । ये अधि-[क]ारिणः अन्नं समष्टिरूपं ब्रह्मोपासते अन्ने ब्रह्मबुद्धिं कुर्वन्ति ते उपासकाः प्रसिद्धं सर्वं सकलं अन्नं आप्नुवन्ति प्राप्नुवन्ति यथेष्टमन्नं लभन्त इत्यर्थः । [अ]त्र सर्वान्नप्राप्त्यादिफलवचनं त्वर्थवादत्वेन नेयम् । ब्रह्मविद्योपक्रमोपसंहारविरो-[धा]न् मध्ये ग्रंथस्यान्यपरत्वायोगात् ॥

अन्नब्रह्मविदः सर्वान्नप्राप्तौ हेतुं वक्तुं पुनराह—

**अन्नꣳ हि भूतानां ज्येष्ठं । तस्मात्सर्वौषधमु-च्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन व-र्द्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदु-च्यत इति ॥ २ ॥**

हि यस्मात्सर्वभूतानां जन्मजीवनादिकारणत्वात् अन्नं ज्येष्ठं तस्मात्सर्वौ-[ष]धमुच्यते पूर्वं व्याख्यातं । अनेन पुनर्वचनेनान्नदेवताऽत्मनो विराजः स्वका-[र्ये]षु सर्वप्राणिषु व्याप्तिः प्रतिपाद्यते । सा च व्याप्तिर्विराडात्मभावमापन्नस्य [वि]द्व । न ब्रह्मविदः सर्वप्राण्यात्मना सर्वान्नात्तृत्वे हेतुर्भवतीत्यर्थः । तथा चोक्तं [सु]रेश्वराचार्यैः—'कार्यं सर्वं यतो व्याप्तं कारणेनात्तृरूपिणा । इति हेतूपदेशाय

त्वन्नं हीत्युच्यते पुनः' इति ॥ १ ॥ अन्नाद्भूतानि जायन्ते जा वर्द्धन्त इति पुनर्वचनमुपसंहारार्थम् । इदानीमन्नशब्दनिर्वचनमाह— इति । अद्यते व्यष्टिरूपेण भुज्यते प्राणिभिः अत्ति च समष्टिरूपे स्वयं सर्वभूतानि तस्मात् अदनीयत्वादत्तृत्वाच्च तत् अद्यमत्तृभूतं अन्नं उच्यते कथ्यते मनीषिभिरिति शेषः । इतिशब्दोऽन्नमयको त्यर्थः ॥ २ ॥

एवमन्नमयकोशमात्मत्वेन निरूप्य तदभ्यंतरं प्राणमयकोशमात्मत्वे

**तस्माद्वा एतस्मादन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतां । अन्वयं पुरुषविधः॥**

तस्मात् ब्राह्मणवाक्योक्तात् एतस्मात् मन्त्रोक्तात् अन्नरसमयात् विकारात्स्थूलदेहात् अन्यो व्यतिरिक्तः अंतरः अभ्यंतरः आत्मा आ परिकल्पितः प्राणमयः वायुविकारः तेन प्राणमयेन एषः उक्तः स पूर्णः व्याप्तः सः उक्तलक्षणः वै प्रसिद्धः एषः स्थूलदेहे वर्तमानः प्र पुरुषविध एव शिरआद्यवयवैः पुरुषाकार एव। तस्य अन्नमयस्य पुरु पुरुषाकारतां अनु पश्चात् अयं प्राणमयः पुरुषविधः पुरुषाकारो मू क्तप्रतिमावत् नत्वन्नमयस्येवास्य स्वतः पुरुषविधता भवतीत्यर्थः । एवं पूर्वस्य पुरुषविधतामनूत्तरोत्तरः पुरुषविधो भवति पूर्वः पूर्वश्चोत्तरोत्तरेण भवतीति द्रष्टव्यं ॥

पुरुषविधतामेव दर्शयति—

**तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २॥**

तस्य प्राणमयस्य प्राण एव मुखनासिकासंचारी वृत्तिविशेष एव शिरस्त्वेन ध्येयः। व्यानो व्यानाख्यः सर्वनाडीसंचारी वृत्तिविशेषः दक्षि दक्षिणपक्षत्वेन ध्येयः। अपानः अधःसंचारीवृत्तिविशेषः उत्तरः पक्षः वा ध्येयः । आकाशः शरीरमध्यवर्त्याकाशस्थः समानाख्यो वृत्तिविशेषः

शरीरमध्यत्वेन ध्येयः । पृथिवी पृथिवीदेवताक उदानवृत्तिविशेषः पुच्छं प्रतिष्ठा पुच्छत्वेन प्रतिष्ठात्वेन च ध्येयः । उत्क्रमणशीलो ह्युदानो यदा निर्गच्छेत्तदा सर्वः प्राणमयो बहिर्गच्छेदतः पृथिवीदेवतया गुरुत्वेन प्रतिबद्धोत्क्रमणशक्तिकः सन्नुदानः प्रतिष्ठापदप्रयोगयोग्यो भवतीति भावः । तदपि तस्मिन्ब्राह्मणोक्तेऽर्थेएव प्राणमयात्मविषय एषः वक्ष्यमाणः श्लोको मंत्रो भवति इति द्वितीयोऽनुवाकः ॥ २ ॥

**प्राणं देवा अनुप्राणंति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यंति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥**

प्राणं पंचवृत्त्यात्मकं मुख्यं प्राणं अनु अनुसृत्यैव देवाः देवदेहाः मनुष्याः मानवाः पशवः गवादयः चकारात्सर्वे प्राणिनः प्राणंति चेष्टंते प्राणनक्रिययैव क्रियावंतो भवंतीत्यर्थः । तत्र हेतुमाह—हि यस्मात्प्राणः मुख्यप्राणः भूतानां प्राणिनां आयुः जीवनं । यावदस्मिञ्छरीरे प्राणो वसति तावदायुरिति श्रुत्यंतरात् । तस्मात् प्राणस्य जीवनहेतुत्वात् सर्वायुषमुच्यते सर्वायुषमित्याकारकं नाम वेदे कथ्यते । शतं वर्षाणीति तु युक्तं सर्वमायुरिति श्रुत्यंतरात् । प्राणस्य ब्रह्मत्वेनोपासनात्पूर्णायुर्लाभात्मकफलमाह—**सर्वमिति** । ये अधिकारिणः प्राणं उक्तलक्षणं प्राणमयमात्मानं ब्रह्मोपासते प्राणोऽहमस्मीत्येवं ब्रह्मत्वेन चिंतनं कुर्वंति ते उपासकाः सर्वमेव पूर्णमेव शतसंवत्सरात्मकमेव आयुः जीवनं यंति प्राप्नुवंति यो यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं प्राणो हि भूतानामायुरित्यादिपुनर्वचनं पूर्ववद्व्याख्येयं इतिशब्दो मंत्रसमाप्त्यर्थः । तस्य पूर्वोक्तस्यान्नमयस्य एषएव साक्षिप्रत्यक्षएव शारीरः शरीरेऽन्नमये भवः आत्मा भवति । एष क इत्यत आह यइति । यः प्राणमय इत्यर्थः । एतेनान्नमयकोशादात्मबुद्धिमपकृष्य प्राणमये निदध्यादिति सूचितं ॥ यद्वा पूर्वस्य पूर्वोक्तस्यान्नमयस्य यः आकाशादिकारणत्वेन प्रकृतः चिद्वा-

तुरात्मा एष एव प्रकृतचिद्धातुरेव तस्य ब्राह्मणोक्तस्य प्राणमयस्य परमार्थरूपमुख्य आत्मा । अस्मिन्पक्षे आत्मनः शारीरत्वविशेषणं तु साक्षितयोपलभ्यमानत्वादुपपद्यते ॥

एवं प्राणमयं निरूप्य मनोमयमाह—

**तस्माद्वा एतस्मात्प्राणमयात् अन्योऽन्तरआत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वांगिरसः पुच्छं प्रतिष्ठा । तदप्येषश्लोको भवति । इति तृतीयोऽनुवाकः ॥ ३ ॥**

तस्माद्वा ब्राह्मणोक्तात् वै स्मर्य्यमाणात् एतस्मात् मंत्रोक्तात् प्रा॰ अन्यः व्यतिरिक्तः अंतरः अभ्यंतरः आत्मा आत्मत्वेन कल्पितः म॰ मनोऽतःकरणं तद्विकारः तेन मनोमयेन एषः प्राणमयः पूर्णः व्या॰ प्रकृतः वै प्रसिद्ध एषः मनोमयः पुरुषविधएव शिरआद्यवयवैः पु॰ एव तस्य प्राणमयस्य पुरुषविधतां पुरुषाकारतां अनु पश्चात् अयं म॰ पुरुषविधः पुरुषाकारः । उक्तपुरुषाकारस्य पंचावयवानाह—तस्येति । मनोमयात्मनः यजुरेव अनियताक्षरपादावसानो मंत्रविशेषराशिरू॰ एव शिरः प्रधानशिरस्त्वेन ध्येयः । ऋग्दक्षिणः पक्षः ऋग्वेदो द॰ त्वेन ध्येयः । सामोत्तरः पक्षः सामवेदो वामपक्षत्वेन ध्येयः । ॰ विशेषानतिदिशतीत्यादेशो ब्राह्मणभागः आत्मा आत्मत्वेन दक्षिणो॰ योर्मध्यमभागत्वेन ध्येयः । अथर्वांगिरसः अथर्ववेदः पुच्छं प्रतिष्ठा पु॰ प्रतिष्ठात्वेन च ध्येयः । न च यजुरादिवेदानां बाह्यशब्दराशौ रूढत्वात् मांतरमनोमयांगत्वमिति वाच्यं । यजुरादिशब्दानां स्वविषयकमनो॰ त्वांगीकारेण मनोमयांगत्वोपपत्तेः । एवं मनोवृत्तित्वे मंत्राणां वृत्ति॰ इति मानसो जप उपपद्यते । न हि केवला वर्णा एव यजुरादिश॰ किं तु ताल्वादिस्थानेषु वाय्वाद्यभिघातानुकूलेन प्रयत्नेन जनितो यो॰ विशेषस्तद्व्यंग्या ये उदात्तादिस्वरयुक्ता वर्णाः तेच पदानि वाक्या॰

विषया यासां ता वृत्तयोऽत्र यजुरादिशब्दैरुच्यंत इति भावः। यद्वा श्रुतेरनतिशंकनीयत्वात् श्रौतविधिबलादेव शिरस्त्वादिकल्पना। एवमग्रेपि शिरस्त्वादिकल्पना वाचनिकी यौक्तिकी च यथा संभवं ग्राह्या। सर्वत्र युक्तेरसंभवात्। तदपि तत् तत्र ब्राह्मणोक्तार्थेपि एषः वक्ष्यमाणः श्लोकः मनोमयासम्प्रकाशको मंत्रो भवति। इति तृतीयोऽनुवाकः ॥ ३ ॥

**यतो वाचो निवर्तंते। अप्राप्य मनसा सह। आनंदं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। इति चतुर्थोऽनुवाकः ॥ ४ ॥**

यजुरादिवाग्रूपावयवोपेतान्मनोमयात् मनसा संकल्पाद्यात्मकेनसह वाचः यजुरादिरूपाः अप्राप्य अगत्वा निवर्तंते निवृत्ता भवंति स्वात्मनि वृत्तिविरोधदतो वाङ्मनोविशिष्टमनोमयाद्वाचो मनसासह निवर्त्तंत इत्यर्थः। मनसो ज्ञानसाधनत्वात्तत्र ब्रह्मत्वमध्यारोप्य तदुपासनफलमाह—**आनंदमिति।** ब्रह्मणः मनोमयस्य स्वरूपं यजुराद्यवयवोपेतं विद्वान् उपासीनः सौत्रं पदं स्य आनंदं तत्र भवं सुखविशेषमनुभवन् कदाचन कस्मिन्नपि काले गर्भवासादिदुःखान्न बिभेति भयं न प्राप्नोतीत्यध्याहारेण योजना। एतेन स्तुतिपरत्वेन भयमात्रं निषिध्यते न तु भयहेतुः मनोमयज्ञानेप्यविद्याया अनिवृतेः। साक्षात्कारे तु न बिभेति कुतश्चनेति भयहेतुमपि निषेत्स्यति। अद्वैतज्ञाने भयहेतोरभावात्। इतिशब्दो मंत्रसमाप्त्यर्थः। पूर्वस्य पूर्वोक्तस्य तस्य प्राणमयस्य एष एव साक्षिप्रत्यक्ष एव शारीरः शरीरे प्राणमये भवः शारीरः एषः इत्यत आह—**य इति।** यः मनोमय इत्यर्थः। एतेन प्राणमयादात्मत्व-

दृष्टिमपकृष्य मनोमये परमानंदलाभहेतौ तां कुर्य्यादिति सूचित
एवेत्यादिवाक्यस्य पूर्वोक्ततृतीयानुवाके पक्षांतरमप्यनुसंधेयं ॥ तस्मा
णोक्तात् वै स्मरणात् एतस्मात् मंत्रवर्णोक्तात् मनोमयात्संकल्पवृत्ति
मयरूपादात्मनः अन्यः व्यतिरिक्तः अंतरः अभ्यंतरः आत्मा
कल्पितः विज्ञानमयः निश्चयवृत्तिकः तेन विज्ञानमयेन एषः मनो
व्याप्तः सः प्रकृतः वै प्रसिद्धः एषः विज्ञानमयः पुरुषविधः एव
यवैः पुरुषाकार एव तस्य विज्ञानमयस्य पुरुषविधतां पुरुषाका
पश्चात् अयं विज्ञानमयः पुरुषविधः पुरुषाकारः । उक्तपुरुषाकारस्
वानाह तस्येति । तस्य विज्ञानमयस्य श्रद्धैव आस्तिक्यबुद्धिरूपा स
भूता एव शिरः प्रधानशिरस्त्वेन ध्येया । ऋतं शास्त्रानुसारेण
निश्चितं दक्षिणः पक्षः विज्ञानमयस्य दक्षिणपक्षत्वेन ध्येयं । सत्यं
निश्चितस्यैवानुसंधानं उत्तरः पक्षः वामपक्षत्वेन ध्येयं । योगः चित्त
धानं आत्मा देहमध्यभागत्वेन ध्येयः । मह इति महत्तत्वं प्रथमजं
प्रथमजमिति श्रुत्यंतरात् हिरण्यगर्भस्य बुद्धिः समष्टिरूपेति या
प्रतिष्ठा पुच्छत्वेन प्रतिष्ठात्वेन च ध्येयमित्यर्थः । तदपि यथान्
ब्राह्मणोक्तानां प्रकाशका श्लोकाः एवं विज्ञानमयेपि एषः
श्लोकः मंत्रः प्रकाशको भवति । इति चतुर्थोऽनुवाकः ॥ ४ ॥

**विज्ञानं यज्ञं तनुते । कर्म्माणि तनुतेऽपि च ।**
**विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । वि**
**ज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे**
**पाप्मनो हित्वा । सर्वान्कामान् समश्नुत इति ।**

विज्ञानं विज्ञानाख्या बुद्धिः यज्ञं वैदिकं कर्मजातं तनुते श्र
विस्तारयति कर्माण्यपि च लौकिकान्यपि च कर्माणि तनुते त
निखिलाः देवा इंद्रादयः विज्ञानं विज्ञानमयमात्मानं ज्येष्ठं प्रथम
पासते ब्रह्मरूपत्वेन ध्यायंति । एतदुपासनफलप्रदर्शकं द्वितीयं मं
विज्ञानमिति । चेत् यदि विज्ञानं विज्ञानमयमात्मानं ब्रह्म वेद
त्वेन जानाति चेत् यदि तस्मात् ब्रह्मज्ञानात् न प्रमाद्यति विज्ञानम

न्नमयादिकोशेषु ब्रह्मबुद्धिं न करोति तदा शरीरे जीवद्दशायामेव पाप्मनः पानि हित्वा त्यक्त्वा केवलविज्ञानमये ब्रह्मण्यात्मत्वं भावयन्नास्त इति यावत् । हे मनुष्यत्वब्राह्मणत्वादिधर्मवति मनुष्योऽहं ब्राह्मणोऽहमित्याद्यभिमानं मित्तीकृत्य प्रतिषिद्धकर्माचरणैः पाप्मानो भवंति तेषां च विज्ञानमये ब्रह्मात्माभिमानात् पापनिमित्तस्य शरीरे आत्मत्वाभिमानस्यापाये सत्यपायो वति यथा छत्रापाये छायाऽपायः तद्वदिति भावः । विज्ञानमये ब्रह्मस्वरूपन्ने फलमाह—**सर्वानिति** । सर्वान्कामान् देहपातानंतरं विज्ञानमयब्रह्मविनैव स्थित्वा तल्लोकस्थान्निखिलान् भोगान् समश्नुते अनुभवतीत्यर्थः । तेशब्दो मंत्रसमाप्त्यर्थः ॥

**तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनंदमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनंद आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। इति पञ्चमोऽनुवाकः॥ ५॥**

यः उक्तलक्षणो विज्ञानमयः एष एव साक्षिप्रत्यक्ष एव पूर्वस्य पूर्वोक्तस्य नोमयस्य शारीरः शरीरे मनोमये भवः शारीरः आत्मा आत्मत्वेनाभिमत र्थः । मनोमयादात्मत्वदृष्टिमपकृष्य विज्ञानमये आत्मत्वबुद्धिं कुर्यादिति वः । आनंदमयमात्मानमाह—**तस्मादिति** । तस्माद्वा ब्राह्मणोक्तात् वै र्यमाणात् एतस्मात् मंत्रवर्णोक्तात् विज्ञानमयात् कर्तृरूपात् अन्यो व्यतिरिक्तः अंतरः अभ्यन्तरश्चास्ति आत्माऽऽनन्दमयः शुभकर्मफलानुभवकाले वृत्तिरन्तर्मुखा सती आत्मानन्दप्रतिबिम्बिता भवति सैव कर्मफलभोगोमे सति निद्रारूपेण लीना भवति सा वृत्तिरानन्दमय आत्मा भोक्तृरूपो तीति शेषः । तेन आनन्दमयेन एषः विज्ञानमयः पूर्णः व्याप्तः सः प्रकृतः प्रसिद्धः एषः आनन्दमयः पुरुषविध एव शिरआद्यवयवैः पुरुषाकार एव ।

तस्य आनन्दमयस्य पुरुषविधतां पुरुषाकारतां अनु पश्चात् अयं वै पुरुषविधः पुरुषाकारः। आनन्दमयस्य पञ्चावयवानाह तस्येति। तस्य यस्यात्मनः प्रियमेव इष्टार्थदर्शनजन्यसुखमेव शिरः प्रधानशिरस्त्वे मोदः इष्टार्थलाभजन्यसुखविशेषः दक्षिणः पक्षः दक्षिणपक्षत्वेन ध्येयः इष्टार्थस्य भोगजन्यसुखविशेषः उत्तरः पक्षः वामपक्षत्वेन ध्येयः प्रियाद्यवयवेषु विशेषेषु सामान्यरूपेणानुगतं सुखं आत्मा आ मध्यभागत्वेन ध्येयं। ब्रह्म यत्प्रकृतं सत्यज्ञानानन्तलक्षणं यस्य च मन्नमयादिकोशपञ्चकमुपन्यस्तं तत्सर्वान्तरभूतं परं ब्रह्म पुच्छं प्रति न्दमयस्य पुच्छत्वेन प्रतिष्ठात्वेन ध्येयं। अविद्यापरिकल्पितद्वैतस्याव द्वैतं ब्रह्म प्रतिष्ठेत्यर्थः। तदपि तदेतस्मिन्नप्युक्तब्राह्मणार्थे आनन्द एषः वक्ष्यमाणः श्लोको मन्त्रो भवति। इति पञ्चमोऽनुवाकः॥ ५

**असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथा तोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्च न गच्छति ३ आहो विद्वानमुं लोकं प्रेत्य कश्चि त्समश्नुता ३ उ। ४**

असत् सर्वव्यवहारातीतत्वादविद्यमानं ब्रह्म इति एवं चेत् यदि विजानाति सः असद्रूपत्वेन ब्रह्मवेदिता असन्नेव पुरुषार्थशून्यत्वादसद् भवति स्यात्। यद्वा योऽश्रद्धया असद्ब्रह्म नास्ति ब्रह्म इति एवं चेद् विजानाति सः नास्तिकः असन्नेव असाधुरेव भवति। अस्ति ब्रह्म धिष्ठानं सर्वजगत्कर्तृ सर्वलयाधारभूतं ब्रह्मास्ति विद्यते इति एवं यो वेद ततः तस्मात् अस्तित्वेन ब्रह्मवेदनात् एनं ब्रह्मविदं सन्तं ब्रह्मस्वरूपेण परमार्थसदात्मभावापन्नं विदुः विजानन्ति ब्रह्मविद इ तस्मादस्तीत्येव ब्रह्म वेदितव्यमिति वाक्यार्थः। इतिशब्दो मन्त्रस यः उक्तलक्षण आनन्दमयः एष एव आनन्दमय एव पूर्वस्य पूर्वो विज्ञानमयस्य शारीरः शरीरे विज्ञानमये भवः शारीरः आत्मा

ल्पित इत्यन्वयः । एवं श्रवणविधयाऽऽत्मतत्वं प्रदर्श्य मननविधया तत्प्र-
दर्शनाय शिष्यस्य प्रश्नानाह अथेति । अथानन्तरं अतः ब्रह्मण आकाशादि-
कारणत्वेन सर्वप्रति सामान्यात् अनु ब्रह्मविदाप्नोति परमिति विद्यया प्राप्यं
ब्रह्मेत्याद्याचार्योपदेशात्पश्चात् शिष्यस्य प्रश्नाः संतीति शेषः । तानेव दर्श-
यते उतेति । उत अपि अविद्वान् अब्रह्मविदपि प्रेत्य मृत्वा अमुं बुद्ध्यादिसा-
क्षितया प्रत्यक्षसिद्धं लोकं प्रकाशात्मकब्रह्मस्वरूपं कश्चन किं गच्छति
प्राप्नोति किं वा न प्राप्नोति द्वौ प्रश्नौ द्रष्टव्यौ । यद्यविद्वान्सामान्यकारणमपि
ब्रह्म न गच्छति तर्हि विदुषोपि ब्रह्मागमनमित्याशङ्क्यते आहो इति । समश्नुता
इत्यत्र समश्नुते उ इति स्थिते अयादेशे यलोपे च कृते अकारस्य प्लुतिः
समश्नुता ३ उ इति । तथा च उतेति पूर्वोक्तोतशब्दात् तकारमाकृष्य उ-
शब्देन वक्ष्यमाणेन संयोज्योतेति सिद्धं कृत्वाऽऽहो इत्यस्मात्पूर्वं संयोज्यं
उताहो इति प्रश्नार्थं विद्वान् कश्चित् ब्रह्मविदपि इतः प्रेत्य मृत्वा अमुं लोकं
व्याख्यातं समश्नुते प्राप्नोति उताहो किं वा अविद्वानिव न समश्नुते इति
प्रश्नौ । अनुप्रश्ना इति बहुवचनसामर्थ्यात्प्रश्नचतुष्टयं बोध्यं । यद्वा द्वावेव
प्रश्नौ विद्वदविद्वद्विषयौ बहुवचनसामर्थ्यं तु प्रकारान्तरेणाप्युपपद्यते । तथाहि
असद्ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेदेति श्रवणात् पाक्षिकसत्त्वासत्त्वसंश-
यात्किं तद्ब्रह्मास्ति नास्ति वेति प्रश्नः कल्प्यते । ब्रह्मणोऽपक्षपातित्वादविद्वान्
गच्छति न गच्छतीति द्वितीयः प्रश्नः । किं विद्वान्समश्नुते न समश्नुते इति
तृतीयः प्रश्नः ॥

एतेषां प्रतिवचनार्थमुत्तरो ग्रंथ आरभ्यते । तत्र नास्तित्वशङ्कानिरासायाह—

**सोऽकामयत । बहु स्यां प्रजायेयेति । स तपो-
ऽतप्यत । स तपस्तप्त्वा । इद९ सर्वमसृजत ।
यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् ॥**

यद्यपि विशेषतो नोपलभ्यते तथापि विमतं जगत् सदुपादानकं कार्य-
त्वात् घटादिवदित्यादिना तदस्तित्वमनुमीयते । सत्यं ज्ञानमनन्तं ब्रह्मेति
प्रोक्तं सत्यत्वं सत्वोक्त्यैव सिद्धं भवति । तत्सत्यत्वशब्दयोः पर्यायत्वात् ।
असतः सज्जन्म सम्भवति कथमसतः सज्जायेतेति श्रुत्यन्तरात् । सः पर-

मात्मा आकाशादिकारणत्वेन प्रकृतः अकामयत कामितवान्
प्रभूतं स्यां भवेयं। कथमेकस्य बहुभवनमित्यत आह—प्रजायेयेति
येत्यर्थः। न हि पितुरर्थान्तरभूतानां पुत्रादीनां बहुभवनवद्ब्रह्मणो
भूतानामाकाशादिविकाराणां बहुभवनमत्र विवक्षितं आकाशादि
वेशेनैव बहुभवनस्य विवक्षितत्वात्। न च पूर्वसिद्धस्य ब्रह्मणः सद्
त्तिरयुक्तेति वाच्यं आकाशाद्यर्थान्तरानुप्रवेशेनैवोत्पत्त्यङ्गीकारात्।
कामः सन् सः आत्मा तपोऽतप्यत सृज्यमानजगद्रचनादिविषय
नामकरोदित्यर्थः। स आत्मा तपस्तप्त्वा आलोचनं कृत्वा इदं सं
कर्मादिनिमित्तानुरूपं देशतः कालतो नाम्ना रूपेण च यथासंभ
णिभिर्देवत्वमनुष्यत्वादिसर्वावस्थैरनुभूयमानं निखिलं जगत् असृजत
यदिदं किंच यत्किंचेदमविशिष्टं। तत् जगत् सृष्ट्वा उत्पाद्य तदेव स
अनुप्राविशत् अनुप्रवेशं कृतवान्। अत्र गुहात्वेन विज्ञानमयको
दीपादिवज्जडत्वेपि स्वाभाववैचित्र्यात् संयुक्तार्थोपलम्भहेतुभूता
तच्छब्देन विवक्षिता तस्यामेव स्रष्टुर्ब्रह्मणः प्रत्यग्रूपेणोपलम्भादनुप्रवे
चर्यते। ब्रह्मप्रत्यगात्मनोर्वास्तवैक्यमादाय सृष्ट्यनुप्रवेशयोरेककर्तृ
भावः॥

**तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानि-रुक्तं च। निलयनं चानिलयनं च। विज्ञानं चा-विज्ञानं च। सत्यं चानृतं च। सत्यमभवत्। यदिदं किंच। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥ ६॥**

तत् कार्य्यं अनुप्रविश्य सृष्टं सच्च पृथिव्यप्तेजोभूतत्रयं मूर्तं
चरं त्यच्च वाय्वाकाशात्मकभूतद्वयममूर्तं परोक्षं अभवत् पंचीकृतपञ्च
बभूव। निरुक्तं नामरूपादिभिर्निरूपयितुं शक्यमभिव्यक्तं भूतभौतिकं
रुक्तं नामरूपादिभिर्निरूपयितुमशक्यमनभिव्यक्तं। निलयनं आधारत्व
गृहप्रासादादि अनिलयनं निराश्रयतया प्रसिद्धं आकाशादिकं। वि
मनुष्यादिकं अविज्ञानं अचेतनं पाषाणादिकं। सत्यं व्यवहारविषयं

...कं अनृतं प्रातिभासिकं मरीच्युदकादिकं। सत्यं परमार्थसत्यस्वरूपं ब्रह्म ...भवत् सत्यं ब्रह्मैव सदादिरूपेण बभूवेत्यर्थः। सदादिकमेव पुनरविशेषे-...ाह—यदिदं किं चेति। यत्किंचेदमविशेषितं वस्तुजातं तत् उक्तानुक्तल-...णं सर्वं सत्यं परमार्थसत्यं इति एवं आचक्षते कथयंति ब्रह्मविद इति शेषः। ...वमुक्तात्मप्रवेशेनास्ति नास्तीति प्रश्नस्य प्रतिवचनविषये एतदुक्तम्—आत्मा-...कामयत बहुस्यामिति स यथाकामं चाकाशादिकार्य्यं सच्च त्यदादिलक्षणं ...ृष्ट्वा तदनुप्रविश्य पश्यन् शृण्वन्मन्वानो विजानंश्च बहूभवँस्तस्मात्तदेवेदमा-...काशादिकारणं कार्य्यस्थं परमेव्योमन् हृदयगुहायां निहितं तत्प्रत्ययावभास-...विशेषेणोपलभ्यमानमस्तीत्येवं विजानीयात् असतः प्रवेशायोगादित्यवबो-...द्धव्यम्। तदपि तदेतस्मिन्नपि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो ...भवति। इति षष्ठोऽनुवाकः॥ ६॥

**असद्वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत॥ तस्मात्तत्सुकृतमुच्यत इति।**

...वै प्रसिद्धं इदं दृष्टिगोचरं जगत् अग्रे उत्पत्तेः प्राक् असत् अव्यक्तं ब्रह्म ...आसीत् अभवत्। नत्वसच्छब्देन शून्यमुच्यते कथमसतः सज्जायतेति श्रुति-...वाक्येन निषेधात्। ततः अव्यक्तात् ब्रह्मणः वै प्रसिद्धं सत् प्रविभक्तनामरूप-...विशेषं जगत् अजायत उत्पन्नं। ननु तत्किं प्रविभक्तकार्यं पितुरिव पुत्रो ...इत्याह—तदिति। तत् असच्छब्दवाच्यं ब्रह्म स्वयं अन्यानधिष्ठितं सत् ...आत्मानमकुरुत आत्मानमेव जगद्रूपेण कृतवदित्यर्थः। यस्मादेवं तस्मात् ...स्वयमेवात्मनो जगदाकारकरणात् तत्सुकृतं तद्ब्रह्म सुष्ठु कर्तृ उच्यते कथ्यते ...त्या इति शेषः। इतिशब्दो मन्त्रसमाप्त्यर्थः। तस्मादस्ति ब्रह्मेति सिद्धम्॥

इतश्चास्ति ब्रह्मेत्याह—

**यद्वै तत्सुकृतं। रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये-**

**ऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयंगतो भवति ॥**

यत् वै यदेव तत्प्रकृतं ब्रह्म सुकृतं सुष्ठु कर्तृ सः वै स एव ब्रह्म... रादि रसवत्सुखहेतुत्वाद्ब्रह्मानन्दो गौण्या वृत्त्या रसपदेनोच्यते स इति... क्षया पुल्लिङ्गनिर्देशः। सुखहेतुत्वमेवाह—रसमिति। हि यस्मात् अयं... लब्ध्वा सत्वप्रधानांतःकरणेऽभिव्यक्तं ब्रह्मानन्दं प्राप्य आनन्दी भ... भवति ब्रह्मानन्देन निरुपाधिकेन विद्वांसः सानन्दा भवन्ति सोपाधिके... जनाः तथा चानन्दकरत्वादानन्दरूपं ब्रह्मास्तीति भावः। प्राणादिक्रिया... प्यस्त्यानन्दात्मा ब्रह्मेत्याह—क इति। यत् यदि एषः सर्वसाक्षिभूतः... हार्दाकाशस्थबुद्धिगुहायां निहितः आनंदः आनन्दरूप आत्मा न स्यात्... नुकूलप्राणादिव्यापारप्रयोजको न भवेत् हि तर्हि क एवान्यात् अपा... निःश्वासं को नाम कुर्यात् कः प्राण्यात् प्राणव्यापारमुच्छ्वासं कः ... कोपीत्यर्थः। प्राणापानोपलक्षितकार्य्यकरणानां प्रवृत्तिर्यदधीना सः... करणप्रवर्त्तकश्चेतनोऽस्तीति भावः। तत्कृत एव लोकस्यानन्दो भव... **एष इति।** हि यस्मात् एष एव प्रकृत आनन्दात्मैव आनन्दयाति आ... लोकं स्वधर्मानुरूपं सुखयतीत्यर्थः। विद्वदविदुषोर्भयाभयहेतुत्वादर्या... तत्राभयहेतुत्वं विदुषो दर्शयति—यदाहीति। हि यस्मात् एषः साधक... एव यस्यां विद्यावस्थायामेव एतस्मिन्ब्रह्मणि अभयं यथा स्यात्तथा... आत्मभावं विन्दते लभते अथ तदा सः ब्रह्मवित्तमः सन् अभयंगतो... ब्रह्मानन्दं प्राप्नोति भयहेतोरविद्याकृतनानात्वदर्शनस्याभावादिति स... यद्वा अभयं अभयामिति लिङ्गव्यत्यासेन प्रतिष्ठाविशेषणं। कीदृशे... अदृश्ये दृश्यत्ववर्जिते अनात्म्ये आत्मपदेनात्मीयं शरीरमुच्यते तद्रहिते... रुक्ते इदंतया निर्वचनीयभिन्ने अनिलयने निलयनमाश्रयस्तद्वर्जिते ... धर्मविलक्षणे ब्रह्मणीति वाक्यार्थः॥

एवमैक्यदर्शनविदुषोऽभयकारणमुक्त्वा भेददर्शनमविदुषो भयकारण...

**यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥ ७॥**

यदैव यस्यामविद्याऽवस्थायामेव हि यस्मात् एषः अनात्मदर्शी एतस्मिन् ब्रह्मणि उत् अपि अरं अल्पमपि अन्तरं भेदं कुरुते अन्योसावन्योहमस्मीति पश्यति अथ तस्माद्भेददर्शनात् तस्य भेददर्शिनः भयं भीतिर्भवति द्वितीयाद्वै भयं भवतीति श्रुतेः। न केवलमविदुष एव ब्रह्म भयरूपं किंतु विदुषोपीत्याह–तदिति। तुशब्दोऽप्यर्थः भिन्नस्थानकः एवकारोपि भिन्नक्रमः। तथा च तद्ब्रह्म विदुषोपि ज्ञानिनोपि मन्वानस्य ज्ञानापरिपाकवशात् उपास्योपासकभावं पश्यतो ज्ञानावस्थातः प्रच्युतस्य भयमेव भवतीति योजना। तदपि तदेतस्मिन्नपि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो भवति। इति सप्तमोऽनुवाकः ॥ ७ ॥

**भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। सैषाऽऽनंदस्य मीमांसा भवति ॥**

अस्मात् प्रकृताद्ब्रह्मणः भीषा भयेन वातः वायुः पवते गच्छति। भीषा ब्रह्मणो भयेन सूर्य उदेति प्राचीदिशात उद्गच्छति। अस्माद्ब्रह्मणः भीषा भयेन अग्निः पावकः ज्वलतीति शेषः। अस्माद्भीषा इंद्रः वर्षादिस्वकार्य्यं करोतीति शेषः। अस्माद्ब्रह्मणो भीषा मृत्युः सर्वप्राणहर्ता पञ्चमः पञ्चसंख्यापूरकः धावति शीघ्रं गच्छति क्षीणायुषं प्रतीति शेषः। इतिशब्दो मन्त्रसमाप्त्यर्थः। एवं यद्वा वातादीनामपि भयकारणं ब्रह्म तदान्येषां किं वक्तव्यमित्याशयेन श्रुतौ वातादयः पूज्यतमा उदाहृता इति भावः। ननु वातादिभयकारणब्रह्मणः यदेष आकाश आनन्दो न स्यादिति वाक्योक्तं यदानन्दरूपत्वं तदनुपपन्नं आनन्दस्य बाह्याभ्यन्तरसाधनसम्पत्तिजन्यत्वनियमादित्याशंक्य अन्यानन्दः क्वचित्काष्ठां प्राप्तः साऽतिशयत्वात्परिमाणवदित्यनुमानादानन्दतारतम्यावधित्वेन निरतिशयस्वाभाविकानन्दरूपब्रह्मानन्दनिश्चयार्थं विचारमाह–सैषेति। आनन्दस्य ब्रह्मानन्दस्य सा एषा वक्ष्यमाणलक्षणा मीमांसा किमयमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदस्ति आहोस्वित् स्वाभाविक इत्येवंरूपा विचारणा भवति तत्र लौकिकानन्दस्य बाह्याध्यात्मिकसाधनसम्पत्तिजन्यस्योत्तरोत्तरोत्कर्षो निर्दिश्यते ब्रह्मानन्दानुमानार्थम्।

निर्दिष्टे हि लौकिकानन्दे तदवधित्वेन निरतिशयो ब्रह्मानन्दोऽनुमी[illegible]
मर्थमयमारम्भः ॥

तत्र मानुषानन्दमर्य्यादामाह—

**युवा स्यात्साधुयुवाऽध्यापकः। आशिष्ठो द्रढि[ष्ठो]**
**बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पू[र्णा]**
**स्यात्। स एको मानुष आनन्दः ॥ १ ॥**

युवा स्यात् यौवनसम्पन्नो भवेत् साधुयुवा साधु यथोक्तकारी [illegible] युवा चेति साधुयुवा युवाप्यसाधुर्भवति साधुरप्ययुवाऽतो यूनो साधुयुवा स्यात्। अध्यापकः अधीतवेदवेदाङ्गः। आशिष्ठः आशास्तृ[illegible] तमो वा क्षिप्रकारिषु मध्ये स्वयमतिशयत्वात्। यद्वा आसमंतात् शि[illegible] पित्राचार्य्यैः क्रमेण शिक्षितः। द्रढिष्ठः अतिशयेन दृढः। बलिष्ठः [illegible] बलवान्। एवमाभ्यन्तरसाधनसम्पत्तिमुक्त्वा बाह्यसम्पत्तिमाह—त[illegible] तस्य उक्तलक्षणस्य पुरुषस्य इयं प्रत्यक्षविषया सर्वा पृथिवी सप्तम[illegible] सुमेरुमध्यिका भूमिः वित्तस्य वित्तेन धनेन पूर्णा स्यात् वशे भवेत्। [illegible] चित्तप्रसादः एकः सर्वमानुषानन्दसमष्टिरूपः मानुषः मनुष्यसम्बन्धी [आन]न्दो भवतीत्यर्थः ॥ १ ॥

**ते ये शतं मानुषा आनंदाः। स एको मनुष्य[गन्धर्वाणामानन्दः]**
**गन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य [illegible]**

ते ये उक्तरूपाः शतं शतगुणिताः मानुषाः मनुष्यसम्बन्धिनः [illegible] स एकः मानुषानन्दशतं मिलित्वा एकत्वसंख्यामापन्नः मनुष्य[गन्धर्वाणाम्] मनुष्याः सन्तो ये कर्मोपासनाबलाद्गन्धर्वत्वं प्राप्तास्ते मनुष्यगन्धर्वाः [अन्त]र्धानादिशक्तिसम्पन्ना द्वीपान्तरवासिनः। उक्तं च वार्तिके—[illegible] कामरूपा अन्तर्धानादिशक्तयः। नृत्यगीतादिकुशला गन्धर्वाः स्युर्नृ[illegible] इति। तेषां मनुष्यगन्धर्वाणामानन्दः सुखविशेषो भवति श्रोत्रियस्य [illegible] यित्वे सत्याचारनिष्ठस्य शुद्धचेतसो वा अकामहतस्य उक्तमानुषानन्दवि[illegible] मनारहितस्य चकारादवृजिनस्यापि ग्रहणं यश्च श्रोत्रियोऽवृजिनोऽका[illegible] श्रुत्यंतरात् उक्तमनुष्यगन्धर्वानन्दो भवतीति सम्बन्धः। अकामहत[illegible]

वलमानुषानन्दे कामरहितत्वं बोध्यं। नतु मनुष्यगन्धर्वानन्दे तथा चोक्तं र्तिके—'मर्त्याद्भोगाद्विरक्तस्य ह्युत्तराह्लादकामिनः' इति। एवमुत्तरत्रापि पूर्व-र्वानन्देषु कामानभिभूतत्वं उत्तरोत्तरानन्देषु कामनावत्त्वं चोहनीयम्। अत व प्रथमपर्य्यायेऽकामहतस्येति नोक्तं यदि तत्राप्यकामहतो गृह्येत तदा स्यैव सार्वभौमानन्दतुल्य आनन्दः स्यादिति व्याघातो भवेत् मानुषानन्दे स्पृहो मानुषानन्दभोगभागी चेति। ततो मनुष्यगन्धर्वानन्देन तुल्यमानन्दं स्य दर्शयितुं प्रथमपर्य्याये तदग्रहणमिति भावः। न च मनुष्यगन्धर्वस्य तगीतादिसामग्रीविशेषजन्यो हर्षविशेषोऽत्रस्थश्रोत्रियस्य कथं भवेदिति च्यम्। नृत्यादिजन्यहर्षविशेषस्य क्षणिकस्यासत्त्वेपि मनुष्यगन्धर्वसम्बन्धिमु-यानन्दस्य सत्त्वात्। न हि नृत्तादिजन्यहर्षमात्रमेव मनुष्यगन्धर्वानन्दत्वेन ह्यते किं तु मनुष्यगन्धर्वस्य स्वोचितविषयप्राप्त्या तदिच्छानिवृत्तौ नृत्तगी-दिजनितहर्षविशेषे च शान्ते सति या तृप्तिरनुगच्छति स वै मुख्यानन्दः न मनुष्यगन्धर्वाणां मुख्यानन्देन सदृश आनन्दः श्रोत्रियस्य भवतीत्यर्थः। या च स्मर्यते—यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं। तृष्णाक्षयसु-स्यैते नार्हतः षोडशीं कलामिति। न च श्रोत्रियत्वावृजिनत्वाकामहतत्वाना-नन्दसाधनानां तुल्यरूपत्वेपि कस्यचिच्छ्रोत्रियस्य मनुष्यगन्धर्वानन्देन स्य आनन्दः कस्यचित्तु देवगन्धर्वानन्देनेत्यादिरूपभेदः किंनिबन्धन इति च्यम्। सर्वपर्य्यायेषु श्रोत्रियत्वावृजिनत्वयोस्तुल्यत्वांगीकारेणाकामहतत्वस्य दादानन्दभेदोपपत्तेः। अयमाशयः मनुष्यगन्धर्वपर्य्यायस्थश्रोत्रियस्य मानुषा-न्दमात्रे कामाभावो नतु तदतिरिक्तानन्देषु तथा देवगन्धर्वपर्य्यायस्थश्रो-यस्य मानुषानन्दे मनुष्यगन्धर्वानन्दे च कामाभावो नतु देवगन्धर्वादी-मानन्देषु। एवं चाकामहतत्वभेदेनानन्दभेदे सति यावद्यावदकामहतत्वोत्क-तावत्तावच्छ्रोत्रियस्यानन्दोत्कर्षो भवति सर्वथा कामोपशमे सति सर्वोत्कृष्ट-मानन्दप्राप्तिर्भवतीति निरतिशयस्याकामहतत्वस्य परमानन्दप्राप्तिसाधन-विधानार्थमकामहतस्य ग्रहणमित्यवगम्यत इति॥ २॥

**ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य॥ ३॥**

ते ये उक्तरूपाः शतं शतसंख्याकाः मनुष्यगन्धर्वाणां उक्त- मानंदाः स एकः मनुष्यगन्धर्वानन्दशतं मिलित्वा एकत्वसंख्यामा- गन्धर्वाणां कल्पादावेव देवलोके जाता गायका देवगन्धर्वाः ते- भवति । श्रोत्रियस्य पूर्वोक्तलक्षणस्य अकामहतस्य मानुषानन्दे मनु- नन्दे च कामनारहितस्य देवगन्धर्वानन्दे कामनावतश्च चकाराद्वृ- गन्धर्वानन्दो भवतीति पूर्वेण संबन्धः ॥ ३ ॥

**ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पि- तॄणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चा- कामहतस्य ॥ ४ ॥**

ते ये शतमित्यादिपूर्ववद्व्याख्येयं । पितॄणां अग्निष्वात्तादीनां चिर- कानां चिरकालस्थायिलोकान् लोकयंत्यनुभवंतीति चिरलोकलोकाः- श्रोत्रियस्येत्यादिपूर्ववत् ॥ ४ ॥

**ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आजानजानां देवानामानन्दः श्रोत्रि- यस्य चाकामहतस्य ॥ ५ ॥**

ते ये शतमित्यादिपूर्ववत् आजानजानां आजानो देवलोकस्तत्र कर्मानुष्ठानेन जातानां देवानां देवयोनिं गतानामानन्दो भवति । श्रोत्रि- दिपूर्ववत् ॥ ५ ॥

**ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपियंति श्रोत्रियस्य चाकामहतस्य ॥ ६ ॥**

ते ये शतमाजानजानामित्यादिपूर्ववत् । कर्मदेवानां श्रौतकर्मणा गतानां । कर्मदेवत्वं स्वयमेव श्रुतिराह—ये कर्मणेति । ये पुरुषाः कर्म- केनाग्निहोत्रादिना देवानिति त्रयस्त्रिंशदष्टौ वसव एकादशरुद्रा द्वाद- इंद्रः प्रजापतिश्चेति तान् इंद्रादिदेवाधिष्ठितान् लोकान् अपियन्ति - तेषामानन्दो भवति श्रोत्रियस्येत्यादिपूर्ववत् ॥ ६ ॥

**ते ये शतं कर्मदेवानामानन्दाः स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ७ ॥**

ते ये शतं कर्मदेवानामित्यादिपूर्ववद्याख्येयं स एको देवानां जातितो देवानामानन्दः ॥ ७ ॥

**ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ८ ॥**

ते ये शतं देवानामिति व्याख्यातं इन्द्रस्य देवराजस्यानन्दः ॥ ८ ॥

**ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्य चाकामहतस्य ॥ ९ ॥**

ते ये शतमिन्द्रस्येति व्याख्यातं बृहस्पतेः देवगुरोः ॥ ९ ॥

**ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य ॥ १० ॥**

ते ये शतं बृहस्पतेरित्यादिप्रसिद्धः प्रजापतेः विराजः त्रैलोक्यशरीरिणः ॥ १० ॥

**ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य ॥ ११ ॥**

ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मणः हिरण्यगर्भस्य समष्टिव्यष्टिरूपस्य संसारमंडलव्यापी यत्रैते आनन्दभेदा एकतां गच्छन्ति तस्य एक आनन्दः श्रोत्रियस्यावृजिनस्याकामहतस्य च सर्वतः प्रत्यक्षमुपलभ्यते । तस्मात्तानि त्रीण्यानन्दसाधनानीत्येवावगम्यते । एवमुक्तः सार्वभौमादिहिरण्यगर्भान्तानन्दोपि यस्यानन्दस्यैकदेशो दर्शितः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात् मात्रापदेनैकदेश उच्यत इत्यर्थः । यत्रातिशयानन्द अकामहतत्वादिविशेषणविशिष्टत्वेन ब्रह्मवित्प्रत्यक्षा एकतां गताः तत्राकामहतत्वाद्यभिधानादभेदसिद्धिं प्राप्ताः अत एव स परमानन्दो निरतिशयो नित्य इति मीमांसया निर्णीतं भवतीति भावः ॥ ११ ॥

उक्तयोराध्यात्मिकाधिदैविकयोरानन्दयोः स्वरूपैक्यमाह—

**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ॥**

सः गुहानिहितवाक्येनोक्तः यश्च आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वा अनुप्रविष्टः अयं अपरोक्षः प्रत्यगात्मा पुरुषे शरीरे व्यष्ट्युपाधौ वर्तते प्रकृतः असौ सकलकामनारहितविद्वत्प्रत्यक्षः लौकिकानन्दकाष्ठात्वेनावसितो मायाऽवच्छिन्नः परमानंदात्मा आदित्ये सूत्रात्मके समष्ट्युपाधौ वर्तते सः उक्तद्विविधोप्यानन्दात्मा एकः भिन्नदेशस्थयोर्घटमठयोराकाशस्वरूपेणैकत्ववद्वस्तुतो भेदरहित इत्यर्थः। एवं कार्य्यरसलाभप्राणप्रतिष्ठाभयदर्शनरूपोक्तोपपत्तिभ्य आकाशादिकारणं ब्रह्मास्तीति प्रश्नः प्रत्युक्तः ॥

**स य एवंवित् अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥ १२ ॥ इत्यष्टमोऽनुवाकः ॥८॥**

द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयाववशिष्टौ भवतः विद्वान्समश्नुते न समश्नुते वेत्यंत्यानुप्रश्नापाकरणाय विदुषो ब्रह्मप्राप्तिः अविदुषो ब्रह्मप्राप्त्यप्राप्तिलक्षणो मध्यमप्रश्नस्तु विदुषो ब्रह्मप्राप्तिप्रतिपादनरूपांत्यप्रश्नप्रतिवचनेनार्थादविदुषो ब्रह्मप्राप्तिर्नास्तीति प्रत्युक्तो भवति अतस्तदपाकरणार्थं श्रुत्या न पृथग्यत्यते । स यः कश्चिदधिकारी सत्यज्ञानानंतलक्षणमद्वितीयमानंदरूपं ब्रह्माहमस्मीत्येवंप्रकारेण वित् ब्रह्मवेत्ता अस्माल्लोकात्प्रेत्य दृष्टादृष्टेष्टविषयसमुदायान्निरपेक्षो भूत्वा स वा एष पुरुषोऽन्नरसमय इत्यत्रान्नरसविकारत्वेनोक्तं अन्नमयं आत्मानं भ्रांत्यात्मत्वेन गृहीतं उपसंक्रामति बाधते ज्ञानकृतभ्रांतिनिवृत्तावत्रोपसंक्रमशब्द उपचर्य्यते मुख्यार्थानुपपत्तेरिति भावः। एतं अन्योऽन्तर आत्मा प्राणमय इत्यत्र प्रकृतं प्राणमयं वायुविकारं आत्मानमुपसंक्रामतीति पूर्ववद्व्याख्येयं। एतं अन्योऽन्तर आत्मा मनोमय इत्यत्र प्रकृतं संशयात्मकवृत्तिमदंतःकरणं आत्मानमुपसंक्रामतीति पूर्ववद्व्याख्येयं

न्योऽन्तर आत्मा विज्ञानमय इत्यत्र प्रकृतं विज्ञानमयं निश्चयात्मकवृत्तिमन्तःकरणं आत्मानमुपसंक्रामतीति पूर्ववत् । एतं अन्योऽन्तर आत्माऽऽनन्दमय इत्यत्र प्रकृतं आनन्दमयं पूर्वोक्तलक्षणं आत्मानमुपसंक्रामतीति पूर्ववत् । अपि कोशानामुपसंक्रमणं नाम भ्रमनिवृत्तिरूपो बाध इत्युक्तं । स च बाधोऽधिष्ठानतत्त्वसाक्षात्कारे तदज्ञाननिवृत्त्या युगपदेव संभवति रज्जुतत्त्वसाक्षात्कारे तत्राध्यस्तसर्पधारादिबाधवत् न तु क्रमेण । तथापि पूर्वमात्मतत्त्वप्रतिपत्त्युपायतयोक्तस्य क्रमस्येहानुवादः श्रुत्या क्रियते नतु तात्पर्य्येणोयत इति बोध्यम् । एवं भ्रांत्यात्मत्वेन गृहीतान् अन्नमयादीन् बाधयित्वा निर्विकल्पक आत्मन्यभयं प्रतिष्ठां विंदत इति पूर्वोक्तं । तत्र प्रमाणमाह—तदपीति । तत्रापि ब्राह्मणोक्तार्थे एषः वक्ष्यमाणः श्लोको मन्त्रो भवति ॥ १२ ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

**यतो वाचो निवर्त्तन्ते । आप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति । एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवं किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते ॥**

यतो यस्मात् अद्वयानन्दात्मनः स्वप्रकाशरूपात् वाचः वाचकाः शब्दाः द्रव्यादिसविकल्पवस्तुविषयाः वस्तुत्वसामान्यात् निर्विकल्पवस्तुप्रकाशनाय प्रयोक्तृभिः प्रयुक्ता अपि मनसा सह शब्दशक्तिजनितविज्ञानेन सह अप्राप्य अप्रकाश्यैव निवर्त्तन्ते स्वशक्तिहीना भवन्ति । एतेन शब्दशक्त्यविषयत्वेपि लक्षणाङ्गीकारात्तं त्वौपनिषदं पुरुषमित्युपनिषत्प्रकाश्यत्वश्रुतेर्न विरोध इति सूचितं । यत्र हि शब्दशक्तिविषयत्वं प्रथममेव प्रवृत्तं भवति तत्र तदनु शब्दशक्तिजनितज्ञानप्रकाश्यत्वमपि भवति । यत्र च तादृशज्ञानप्रकाश्यत्वं तत्र शब्दशक्तिविषयत्वमस्त्येवेति कृत्वा वाङ्मनसयोः सह भाव उक्त इति भावः । ब्रह्मण आनंदं राहोः शिर इतिवदभेदे षष्ठी । विषयविषयिभावरहितं स्वाभाविकं नित्यं ब्रह्मात्मकानन्दं विद्वान् उक्तपञ्चकोशविवेचनेनोक्तानन्दमात्मत्वेन साक्षात्कृतवान् कुतश्चन कुतोपि न बिभेति भयं न प्राप्नोति । भयनिमि-

त्ताभावादित्यर्थः । इतिशब्दो मन्त्रसमाप्त्यर्थः । ननु साध्वक... योर्भयनिमित्तयोः सत्त्वात्कथं न बिभेतीत्यत आह—एतमिति । ... ब्रह्मणो विद्वानित्यादौ प्रकृतं विद्वांसं ह प्रसिद्धं वावावधारणे ... सन्तापयति । किं न संतापयतीत्यत आह—किमिति । किं ... साधु शोभनं कर्म नाकरवं न कृतवानस्मि । तथा किं कस्मात् प्रतिषिद्धं कर्म अकरवं कृतवानस्मि इति एवं साध्वकरणादिकं ... यतीत्यर्थः । यद्वा एतमिति प्रथमार्थे द्वितीया । तथा च एष विद्वान् साधुनाकरवं कस्मादहं पापमकरवमिति न तपति पश्चात्तापं न क... अविदुषस्तु मरणकालासन्ने भवति पश्चात्तापः कुतोऽहं साधुनाक... करवमिति । कुतो विदुषस्तापो न भवतीत्यत आह स य इति । एवं विद्वान् आनंदं ब्रह्मणो विद्वानित्युक्तप्रकारेण ब्रह्मात्मानं सा... सः ब्रह्मात्मवेत्ता एते साध्वसाध्वकरणकरणद्वारा तापहेतुत्वेनोक्ते कर्मणी आत्मानं स्पृणुते आत्मत्वेनैव पश्यति नतु पुण्यपापकर्मते...

उक्तार्थमनूद्य तापाभावे हेतुमाह—

**उभे ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद इत्युपनिषत् ॥ ९ ॥ इति ब्रह्मवल्ली ।**

हि यस्मात् यः पुरुषः एवं सर्वात्मकमानन्दरूपं ब्रह्मात्मत्वेन वेद स एषः विद्वान् उभे एते पुण्यपापे अपि आत्मानमेव आत्मरूपेणैव पश्यतीत्यर्थः । तस्मात् विदुष आत्मभूतेनैव दृष्टे पुण्यपापे तापके... न्तरारम्भके च न भवत इति भावः । इति इयं यथोक्तलक्षणा ... परं श्रेयोऽस्यां निषण्णमिति उपनिषत् सर्वाभ्यो विद्याभ्यः परमरहस्यमिति शेषः । इति ब्रह्मानन्दवल्ली ॥ २ ॥ नवमोऽनुवाकः ॥ ९ ॥

इति ब्रह्मवल्ली ।

---

अथ भृगुवल्ली ।

ॐ ब्रह्मविदः शुभाशुभे कर्मणी तापके जन्मान्तरारम्भके च ... इत्येवमर्थ आनन्दवल्ल्यां विवक्षितः । एतावता च ब्रह्मविद्या परि... अथ ब्रह्मविद्यासाधनानि तपोऽन्नादिविषयाण्युपासनानि च वक्तुमिद...

पिता प्रियाय पुत्राय प्रशस्तामेव विद्यामुपदिशेन्नान्यामिति विद्यास्तुत्यर्थं पितापुत्रसंवादमाह—

**सह नाववत्विति शान्तिः ॥ ३ ॥ ॐ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ॥**

भृगुः नामतः वै प्रसिद्धः वारुणिः वरुणस्यापत्यं । वरुणं वरुणसंज्ञकं पितरं स्वजनकं उपससार उप समीपं गतवान् । भगवो हे भगवन् ब्रह्म जन्मादिलक्षणं अधीहि अध्यापय कथयेत्यर्थः । इति एवं पुत्रवचनं श्रुत्वा वरुणः पिता । यद्ययं शुद्धधीः स्यात्तर्हि स्वमेवोपलक्ष्यं ब्रह्म ज्ञास्यतीत्याशयेन तस्यबुद्धिपरीक्षार्थमुपलक्षणान्येव प्रदर्शयन् त्वंपदार्थोपलक्षणभूतान् शरीरादिपदार्थान् तावदाह—तस्मा इति । तस्मै विधिवदुपसन्नाय स्वपुत्राय भृगवे एतत् वचनं प्रोवाच उक्तवान् । अन्नं शरीरं प्राणं शरीराभ्यन्तरं पञ्चवृत्तिरूपं चक्षुः श्रोत्रमिति ज्ञानेन्द्रियोपलक्षणं । मनःपदेनान्तःकरणचतुष्टयं ग्राह्यं वाचमिति कर्मेन्द्रियोपलक्षणार्थं इति एतान्युक्तान्यन्नादीनि ब्रह्मोपलब्धौ द्वाराणि प्रोवाच इति पूर्वेणान्वयः ॥

एवमन्नादीनां स्वचेष्टाऽन्यथाऽनुपपत्त्या स्वातिरिक्तसाक्षिसिद्धिद्वारत्वमुक्त्वा तत्पदार्थस्योपलक्षणतया जगज्जन्मादिकमाह—

**तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । प्रथमोऽनुवाकः ॥ १ ॥**

तं भृगुं ह किल उवाच ब्रह्मलक्षणं पितोक्तवान् । यतः यस्मादुपादानात् । प्रसिद्धौ । इमानि ब्रह्मादीनि स्तम्बपर्य्यन्तानि भूतानि प्राणिनः जायन्ते उत्पद्यन्ते । येन जातानि येन कारणात्मना जातानि उत्पद्यमानानि जीवन्ति प्राणान्धारयन्ति वर्द्धन्ते । विनाशकाले च प्रयन्ति म्रियमाणानि संति यत् कारणब्रह्मणि अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते प्रलीयन्त इति

यावत् । तत् जन्मादिकारणभूतं वस्तु ब्रह्म सच्चिदानन्दरूपं । तद्विजिज्ञासस्व तद्ब्रह्मणो लक्षणं विशेषेण ज्ञातुमिच्छ । यदेवंलक्षणं तद्विचारद्वारेण प्रतिपद्यस्व । इतिशब्दो वरुणस्योक्तिसमाप्त्यर्थः । एवं ज्ञातुमशक्तः सर्वेषां ज्ञानसाधनानां मध्ये तपो ज्ञानं प्रत्युत्कृष्टं मन्यमानः स भृगुः तपोऽतप्यत विचारं कृतवान्वाक्यार्थज्ञान तात्पर्य्येण लक्ष्यपदार्थविचारणमावृत्त्यानुष्ठितवानित्यर्थः । विचारो विवक्षितः । ननु 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इति स्मृत्युक्तं बाह्यान्तः समाधानलक्षणं तपो गृह्यते । वाक्यार्थज्ञानं प्रति तत्त्वंपदार्थशोधनालोचनस्यैव साधकतमत्वात् । गुरूपदिष्टस्य परब्रह्मलक्षणस्यापि क्रमेण ज्ञातुः आत्मतत्वस्य विवेचने एवोपयोगाच्च । नहि ब्रह्मजिज्ञासोर्भृगोरुक्तं ब्रह्मणि विचारं विना जिज्ञासानिवर्त्तकमन्यदस्ति । अत एव तद्विज्ञाने श्रुतिमूलके 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे ब्रह्मजिज्ञासोर्विचार एव नोपदिष्टः । सुरेश्वराचार्य्यैरपि तपःशब्देन विचार एवोक्तः । यव्यतिरेकादिचिन्तनं वा तपो भवेत् । अहं ब्रह्मेति वाक्यार्थबोध यतः' इति । सूतसंहितायामपि परमेश्वरेणोक्तं—'कोहं मुक्तः कथं प्रतिपन्नवान् । इत्यालोचनमर्थज्ञास्तपः शंसन्ति पंडिताः' इति । तपस्तप्त्वा कुत्रेदं पित्रोक्तं लक्षणं वर्तते क्वेदं लक्षणं परिपूर्णं चेतसा पर्य्यालोच्य ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

**अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्मविजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ १ ॥**

अन्नं समष्टिव्यष्ट्यात्मकं विराट्संज्ञकं ब्रह्म इति एवं व्यजानात् वान् । अन्नस्य ब्रह्मत्वे पित्रा प्रोक्तलक्षणं योजयति अन्नादिति ।

